## अक्षर पुरुष से ही ऋक्-यजु-साम रूप त्रयी विद्या क्रम से सब प्रकार की सृष्टि ।

(पंचकलामय अक्षर पुरुष ब्रह्मा-विष्णु-इन्द्र-अग्नि-सोम रूप से वर्णित हुआ है) वह अक्षर पुरुष जैसी-जैसी कामना करता है वैसी ही सृष्टि होती रहती है । अव्यय पुरुष जो आनन्द-विज्ञान-मन-प्राण-वाक् रूप पांच कलाओं से अभिलक्षित है वह सर्वाधार ही उक्त अक्षर पुरुष आधार-सहारा-आलंबन बना रहता है, (अर्थात् अव्यय-अक्षर का सदा अविनाभाव रहता है—दोनों क्षरका सहयोग करते हैं) । वह अमृतमय अक्षर पुरुष ही अपने अर्द्ध भाग से मृत्यु से घनीभूत होकर मर्त्य भाव में आकर एक विशेष रूप में परिणत हो जाता है, विश्व रूप में विकृत होता चला जाता है । (पाप्मा-मृत्यु-बल-माया-शक्ति-क्रिया ये शब्द वैदिक परिभाषा में पर्याय रूप से ग्रहण किये जाते हैं-अतएव मृत्यु से **घनभूत** अर्द्ध अक्षर का कहा गया है)

यही बात मन्त्र में कही गई है—'**यत्तददृश्यम्**' आदि, उसका अर्थ है कि—

> इस प्रत्यक्ष दिखाई देने वाले संसार का संचालक अदृश्य है—उसे मन तथा इन्द्रियों द्वारा ग्रहण नहीं किया जा सकता-वह अगोत्र (अलक्षण) है—अरूप है— वह आंख-कान-हाथ-पैर वाला नहीं है । वह तो नित्य है—सर्वव्यापी है—सर्वगति है । वह अतिसूक्ष्म है वही अव्यय है, धीर विद्वान् कहते हैं कि भूतमात्र का आदि कारण वही है । इति ।

## अक्षरस्य पुरुषत्वनिरुक्तिः ।

तस्यैतद्विपरिणामिनः प्रथमजं रूपं ब्रह्म त्रयीविद्या ऋक्सामे यजुश्चेति । तेषु यजुस्तावदावरणबलं गृह्णीते न ऋक्सामे । अनावरणे हीमे ऋक्सामे आवरण-धर्मिणो यजुषश्छन्दनाय प्रभवतः । ऋगुक्थं छन्दः । सामेदं पृष्ठं छन्दः । असीमं चेदमक्षरं यजुराभ्यामुक्थपृष्ठाभ्यां छन्दोभ्यां छन्दितं सत्परिच्छिन्नं भूत्वा पुरुषो भवति । पूर्हीयं परिच्छेदरेखा प्रकल्प्यते । तथा च—"**परित्वाग्ने पुरं वय**"—मिति मन्त्रव्याख्यायां ब्राह्मणश्रुत्याम्नायते—

**"वर्म करोति परिवतीभिः । परीव हि पुरः । सा हैषा अग्निपुरी दीप्यमाना तिष्ठति । तिसृभिस्त्रिपुरमेवास्मा एतत्करोति । तस्मादुहैतत्पुरां परमं रूपं यत्त्रिपुरम् । स वै वर्षायसा छन्दसा परां परां लेखां वरीयसीं करोति । तस्मात्पुरां परा परा वरीयसी लेखा भवति । लेखा हि पुरः ।" इति (शत० ६ । ३ । १ । २५)**

## अक्षर की पुरुष भाव निरुक्ति।

(अक्षर पुरुष विपरिणामी होता है यह पूर्व में कहा गया है)। अक्षर का पहला परिणाममय रूप-ब्रह्म-त्रयीविद्या अथवा ऋक्-साम तथा यजुष् कहा गया है। इनमें 'यजुः' ही आवरण करने वाले बलों के चयन को ग्रहण करता है अर्थात् पकड़े रहता है। ऋक् तथा साम ग्रहण नहीं करते। (यद्यपि ऋक्-यजुः-साम तीनों अग्निवेद ही हैं तथापि ऋक्-साम केवल आयतन ही बनते हैं-पदार्थ का आरम्भ भाव ऋक् तथा अन्तिम सीमा साम)। ये ऋक् और साम सदा अनावृत ही रहते हैं। संचित बलों का आवरण कर लेना जिसका धर्म है ऐसे आवरण धर्मी 'यजुः' के छन्दन (परिच्छेद) के लिए ऋक्-साम होते हैं। बल का आरंभ जहां से हो-उसे वैदिक भाषा में उक्थ कहा गया है, ऋक् (ऋग्वेद) उक्थ रूप छन्द है। यह साम तो बलों के पृष्ठ भाग का अन्तिम पृष्ठ छन्द है। अक्षर परिणाम यजुः अपने आप में यद्यपि सीमा रहित असीम ही होता है किन्तु उक्थ ओर पृष्ठ छन्दों से छन्दित होने पर परिच्छिन्न (सीमित) होकर पुरुष बन जाता है। सीमा बनाने वाली रेखा को पुर रूपेण कल्पित किया गया है।

जैसा कि "**परित्वाग्ने पुरं वयम्**" इस मन्त्र की व्याख्या में शतपथ (६। ३। १। २५) का वेद वचन है—

> "वर्म करोति" आदि वचन का तात्पर्य है कि रेखा रूपों के द्वारा वर्म (रक्षा कवच) निर्माण किया जाता है। परिवति से परीव होकर पुर हो गया। इस प्रकार जगत् में यह सब के सामने अग्निपुरी प्रदीप्यमान विराजती है। ऋक् आदि त्रिवेदों से यह आत्मा त्रिपुर ही बना हुआ जगत् चक्र चला रहा है।—इस हेतु से पुरियों का संपूर्ण रूप त्रिपुर कहा जाता है।

अग्नि क्रमशः आगे-आगे की रेखाओं को बड़े-बड़े आकार के छन्दों से रेखांङ्कित करता जाता है। अतएव पूर्व रेखा से अग्रिम रेखाएं बड़ी होती हैं। रेखा अथवा लेखा ही पुर है।

निष्कर्ष यह है कि परिच्छेद रहित निःसीम वह अक्षर तत्व परिच्छेद करने वाली रेखा से परिकल्पित पुर में वास करता है अतः पुरुष नाम से व्यवहृत होता है।

जैसा कि शास्त्र कथन है "**पुरि शेते-पुरुषः**" इति। स्पष्ट यह हो रहा है कि 'यजुः' अग्नि ही पुरुष कहा जा रहा है।

## ऋषिमन्त्रनाम्नोः प्राणवाचोर्यजुः शब्दः।

**सोऽयं यजुः पुरुषो यच्च जूश्चेति भावद्वयैकात्म्यं द्रष्टव्यम्। यद्गतिशीलो वायुः। जूः स्थितिशीलोऽन्य आकाशः। वाय्वाकाशौ चाविनाभूतौ यजुर्ब्रह्म। तदुक्तम्—**

"तदेतद्यजुर्वायुश्चान्तरिक्षं च। यच्च जूश्च। तस्माद्यजुः। एष एव यत्। एष ह्येति।" (शत० १०। २। ६)

एतौ प्राणाकाशौ नित्यमपृथग्भावेन श्रूयेते—"प्राणो ब्रह्म। कं ब्रह्म खं ब्रह्मेति। यद्वाव कं तदेव खम्। यदेव खं तदेव कमिति। प्राणं च हास्मै तदाकाशं चोचुः।" इति। (छां० उ० ४। १०)

तत्र वायुः प्राणः सोऽग्निः। आकाशो वाक्सोमः सः। तावेतावग्नीषोमौ ब्रह्म। ब्रह्माग्निरूपे चास्मिन् विश्वव्यापिनि प्राणे ऋषिशब्दः। ब्रह्मविधसोम-रूपायां चास्यां विश्वव्यापिन्यां वाचि मन्त्रशब्दः। अस्यामेव च मन्त्ररूपायां वाचीदं विश्वमन्तर्निहितं प्रतितिष्ठतीति पश्यन्ति। तथा चाहुः—"**वाचीमा विश्वाभुवनान्यर्पिता**" इति। यत्तु "**ऋषिर्वेदमन्त्र**" इत्येवमस्य विरजसः प्राण-स्यापि मन्त्रत्वमाचक्षते तदुभयोरेतयोर्वाक्प्राणयोरविनाभावात् सम्भवति।

## ऋषि और मन्त्र नाम के प्राण और वाक् का यजुः शब्द से व्यवहार।

उक्त यजुः पुरुष यत् और जूः इन दो भावों का एक रूप बना हुआ है—इस दृष्टि से देखना चाहिये। यत् गति स्वभावी वायु है और दूसरा जूः स्थिति स्वभावी आकाश है। ये वायु और आकाश एक दूसरे से पृथक् कभी नहीं होते इस अपृथक् भाव का ही अविना-भाव शब्द से शास्त्रीय परिभाषा में व्यवहार होता है। ये अविनाभूत-वायु आकाश ही यजुः पद से कहे जाने वाला ब्रह्म स्वरूप है। शत० (१०। २। ६) के ब्राह्मणात्मक वेद वचन में यही विषय कहा गया है—

> ये जो यजुः है—वह वायु और अन्तरिक्ष है। यत् और जूः इन दो भावों से युक्त है। अतः जो कुछ सामने आ रहा है यही यजुः है।

इन दोनों का अविनाभाव रूप अपृथक् भाव छा० उप० (४। १०) में इस प्रकार संश्रुत है—

> "प्राण ब्रह्मरूप है। इसे कं ब्रह्म तथा खं ब्रह्म कहते हैं। (कं वायु खं आकाश इनका अपृथक् भाव कहा जा रहा है)—"जो कं है—वही खं है। एवं जो खं है वही कं है। ऋषिगण इसके लिये प्राण और आकाश का भी प्रयोग करते थे"। इति।

आकाश वायु में वायु प्राण रूप है—यह अग्निमय है। आकाश वाक्-रूप सोम है। (ये वाक् क्षर-संबन्धिनी न होकर अव्यय पुरुष की आनन्द-विज्ञान-मन-प्राण-वाक् रूप

अन्तिम कला परा वाक् है, और प्राण भी वही है।) 'अग्नीषोमात्मक' नाम से कहे जाने वाले ये ही अग्नि-सोम ब्रह्म स्वरूप हैं। यह ब्रह्माग्नि है—यह विश्व-व्यापी है—यह प्राणमय तत्त्व है। ऋषि शब्द प्राण के लिये प्रयुक्त है—(यथा 'असत लक्षणा ऋषयः' कहा गया है और वहां असत् शब्द का अर्थ प्राण ही उल्लिखित है) और 'प्राणा वा एते ऋषयः' यह स्पष्ट कहा गया है। अतः प्राणार्थक ऋषि शब्द है। एवमेव ब्रह्मस्वरूपिणी सोमरूपा इस विश्व-व्यापिनी वाक् में ही ये सारा विश्व अन्तर्निहित रहता हुआ प्रतिष्ठा पा रहा है, ऐसी ऋषियों की दृष्टि है। जैसा कि वेद वचन है—'वाचीमा विश्वाभुवनान्यर्पिता'। कतिपय ऋषियों ने—"**ऋषिर्वेदमन्त्रः**" कहते हुए ऋषि शब्द द्वारा उस रजरहित प्राण को भी मन्त्र-भावेन जो उल्लिखित किया है—वह वाक्-प्राण दोनों के अविनाभाव को देखकर ही किया है। अविनाभाव दृष्टि से ही उसका औचित्य संभव है।

## यजुर्ब्रह्मसम्बन्धिनामग्नीषोमीयाणां भावानां ब्रह्मसत्यत्वम्।

मन्त्रे च ब्रह्मशब्दो यजुष्ट्वादुपपद्यते। उभाभ्यां चाभ्यामग्नीषोमाभ्यां सहयोगादुद्भूते भावे सत्यशब्दो निरूढः। तच्चेदं सत्यं द्विविधम्—ब्रह्मसत्यं देवसत्यं च। तत्रैतदृषिप्राणगर्भितमन्त्रवाग्विकारभूता याजुषाग्नीषोमीयाः सर्वे निगूढा भावा यजुषो ब्रह्मत्वाद् ब्रह्मसत्यमिति सिद्धम्।

### यजु-ब्रह्म से सम्बन्धित अग्निसोमात्मक पदार्थों की ब्रह्मसत्यता।

मन्त्र के विषय में ब्रह्म शब्द यजुः भाव के हेतु ही उपपन्न होता है। (यह पूर्व में कहा गया है) इन दोनों अग्नि और सोम के सहयोग से समुत्पन्न पदार्थ में सत्य शब्द निरूढ है। (अग्नि सोम सहयोग में केन्द्र-बद्धता हो जाती है। केन्द्र-बद्ध को ही सत्य कहा जाता है और निष्केन्द्र को ऋत) यह सत्य दो प्रकार का होता है—एक ब्रह्म-सत्य दूसरा देव-सत्य। इनमें ऋषिप्राण जिसके गर्भ में है ऐसी मन्त्रमयी वाक् के विकार रूप यजुः सम्बन्धी अग्नि-सोमात्मक यच्च यावत् निगूढ (प्रच्छन्न) भावमय-जगत्-रूप-भाव यजुः के ब्रह्मत्व के हेतु ब्रह्मसत्य है, यह स्वतः सिद्ध हो जाता है। (अर्थात् शब्दमय मन्त्र का प्रकृति सम्बन्धी विज्ञानार्थ ही ऋषिप्राण रूप से तदन्तः प्रविष्ट है और वह ब्रह्ममय है—उस ब्रह्म का ही यत्-जूः-रूप में विकास होता है।)

## सुब्रह्मसम्बन्धिनामग्नीषोमीयाणां भावानां देवसत्यत्वम्।

अथ भृग्वङ्गिरसौ सुब्रह्म। तौ चैतौ स्नेहतेजोलक्षणौ भवतः। नाभ्यां किञ्चिद्व्यतिरिच्यते। तथा ह्याह कौषीतकश्रुतौ—

"द्वयं वा इदं सर्वं स्नेहश्चैव तेजश्च, तदुभयमहोरात्राभ्यामाप्तम्।" इति (१७।६)

तत्र स्नेहलक्षणोऽयं भृगुः सोमः। तेजोलक्षणोऽयमङ्गिरा अग्निः। तत्र च सोमविवर्तभूताः प्राणाः पितरः। आङ्गिरसाग्निविवर्तभूताः प्राणा देवाः। उभये हीमे देवसत्यम्।

### सुब्रह्म से सम्बन्धित अग्नि-सोम-मय भावों की देव-सत्यता।

सृष्टि संपादक भृगु और अङ्गिरा रूप मूल तत्त्वों को सुब्रह्म कहा गया है। ये भृगु-अंगिरा स्नेहन (चिकनाई) और तेज (दीप्ति) लक्षण वाले होते हैं। संसार का कोई पदार्थ इनसे रहित नहीं होता। कौषीतक श्रुति (१७।६) में वेद वचन है।

> "स्नेह और तेज ही जगत्-रूप में भासमान हैं। ये दोनों तत्त्व दिन और रात्रि द्वारा पाए गए हैं।"

उनमें स्नेह-लक्षण वाला भृगु है-यह सोम है। तेज-लक्षण वाला अङ्गिरा यह अग्नि है। इनमें सोम के ही विवर्त भूत पितृप्राण हैं। अङ्गिरा सम्बन्धी अग्नि के विवर्तभूत प्राण देव हैं। ये दोनों देव सत्य माने गए हैं।

## ब्रह्मसत्यदेवसत्यारब्धानां जीवशरीराणामृषिपितृ-देवमयत्वम्।

तत्र ब्रह्मरूपैर्ऋषिप्राणैरथ देवरूपैर्देवप्राणैः पितृप्राणैश्चायं जीवः कृतशरीरो जन्म गृह्णाति। तथा च श्रूयते—

"जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान्जायते। ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः। एष वा अनृणी यः पुत्री यज्वा ब्रह्मचारी च" इति।

ब्राह्मण इत्युपलक्षणमशेषाणां जीवानाम्। जात्या ब्राह्मणानामेव सतां सर्वेषामुत्तरतो व्यवस्थिताधिकारिककर्मविशेषशक्तिसिद्ध्यर्थमुपनयनादिसंस्कार-विशेषवशाद्वर्णत्वव्यवस्थानात्। तथा च स्मर्यते महाभारते—

न विशेषोऽस्ति वर्णानां सर्वं ब्राह्ममिदं जगत्।
ब्रह्मणा पूर्वसृष्टं हि कर्मभिर्वर्णतां गतम्॥

### ब्रह्मसत्य और देवसत्य द्वारा निर्मित जीव शरीरों की ऋषि, पितर तथा देव-रूपता।

ब्रह्मरूप ऋषिप्राणों से एवं देव रूप देव प्राणों से तथा पितृ-प्राणों से बने शरीर में यह जीव जन्म ग्रहण करता है। जैसा कि वेद वचन है—

> पैदा होता हुआ ब्राह्मण तीन ऋणों से ऋणी बनकर जन्म लेता है। ऋषियों का ऋण ब्रह्मचर्य से (यहां ब्रह्मचर्य शब्द से केवल वीर्य रक्षा मात्र न मानकर वेद का पर्याय ब्रह्म शब्द मानना उचित है अर्थात् वेद विज्ञान का ज्ञानांश ही ऋषि प्राण के द्वारा बुद्धि अथवा ज्ञान रूप में जीव में प्रतिष्ठित है—अतः **'स्वाध्यायान्न प्रमदितव्यम'** का अनुसरण करते हुए नित्य वास्तविक वेद विज्ञान का अनुशीलन करते रहने से ऋषि-ऋण से मुक्ति मिल जाती है—वह ज्ञानोपलब्धि वीर्यरक्षा पर ही निर्भर करती है अतः साधनत्वेन आवश्यक है)। देवताओं का ऋण जीवन काल में प्रति दिन यज्ञ करते हुए चुकाना चाहिये (यज्ञ का अर्थ भी केवल अग्निहोत्र न लेकर उचित संगति करण (विभाजन) रूप व्यापकता में लेना समुचित है। भोक्ताओं के समुचित सम विभाजन से देव प्रसन्न होकर ऋण मोचन करते हैं)। प्रजा अर्थात् संतान उत्पत्ति द्वारा पितरों के ऋण से मुक्त होना उचित है। वह जीव ही वास्तव में कर्जदार नहीं है—जो पुत्रवान् है, यज्ञ करता है और ब्रह्मचर्य द्वारा ज्ञान संकलन में रत रहता है। (अर्थात् ऋषि-ऋण, देव-ऋण, पितृ-ऋण इन तीनों ऋणों से मुक्त हो जाता है)।

मन्त्र में ब्राह्मण शब्द को मानव मात्र का सूचक (उपलक्षण) समझना चाहिये। ब्राह्मण जाति मात्र के लिए मानने पर तो आगे जीवन में व्यवस्था संपन्न अपने-अपने अधिकार की कर्म सिद्धि के लिये उपनयन (यज्ञोपवीत) आदि विशेष संस्कारों के कारण वर्ण व्यवस्थान हुआ है— (मूल में तो ब्रह्मसमुद्भूत सब ब्राह्मण हैं)। जैसा कि महाभारत का वचन है।

> मानवों में वर्णों की जन्मजात अपनी कोई विशेषता नहीं होती, ये सारा जगत् ब्रह्म से ही उद्भूत होने से ब्राह्म कहलाता है। आदि भाव में सारी सृष्टि ब्रह्म भाव में ही होती है फिर आगे विशेष कर्म संस्कारों से वर्ण विशेष व्यक्तित्व मान लिया जाता है।

## ब्रह्मसत्यदेवसत्यारब्धानां जीवानां ब्राह्मदैवभेदात् संस्कारद्वैविध्यम्।

ब्रह्मसत्यदेवसत्यभेदाच्चैषां जीवानां द्विविध एव संस्कार इष्यते धर्माचार्य्यैः—ब्राह्मो दैवश्चेति। अष्टौ गर्भसंस्कारा, अष्टावनुव्रतसस्कारा, अष्टावातमसंस्काराश्चेति ब्राह्मः। तेनैषां ब्राह्मी तनूर्भवति। अथ सप्तपाकयज्ञाः, सप्तहविर्यज्ञाः, सप्तसोमयज्ञाश्चेत्येकविंशतिसंस्कारा दैवः। तेनैषां दैवी तनूर्भवति।

ब्राह्मसंस्कारसंस्कृत ऋषीणां समानतां सायुज्यतां गच्छति। दैवेन तूत्तरेण संस्कारेणानुसंस्कृतो देवानां समानतां सालोक्यतां सायुज्यतां गच्छति इत्याहुः।

**तत्र अग्निः, वायुः आदित्य इत्येते त्रयो देवाः। "अग्निः सर्वा देवताः। वायुः सर्वा देवताः। इन्द्रः सर्वा देवताः। जायमानो वै जायते सर्वाभ्य एताभ्यो देवताभ्यः।" इत्याहुः।**

तेषामेषां जीवविभागारम्भणा रसाः सहांसि नाम। तेषामनुप्रवेशक्रमो देवयज्ञेनोद्धरणीयस्तावदन्यत्र वैशद्येन व्याख्यातः। इह तु पितॄणां सहसामनुप्रवेशक्रमः पितृयज्ञेनोद्धरणीयो व्याख्यायते।

## ब्रह्म सत्य एवं देव सत्य भेद से उत्पन्न मानव जीवों के ब्राह्म और दैव भेद से द्विविध संस्कार।

केन्द्र रहित ऋत भाव है और केन्द्र बद्ध सत्य कहा जाता है। यह सत्य भाव इस ब्रह्म सत्य (ऋषि प्राण) और देव सत्य रूप जन्मजात भेद के कारण इन मानव प्राणियों के धर्माचार्यो ने दो प्रकार के ही संस्कार माने हैं—

ब्राह्म संस्कार और देव प्राण सम्बन्धी दैव संस्कार। ब्राह्म संस्कारों में आठ गर्भसम्बन्धी संस्कार, यज्ञादि व्रतों (नियमों) का अनुसरणाधिकार संपादन कराने वाले आठ 'अनुव्रत' संस्कार और आठ आत्म संस्कार परिगणित हैं। इन संस्कारों से संस्कृत जीवों का ब्राह्म शरीर प्राप्त हो जाता है–अर्थात् जीवन में ब्रह्मत्व सदा अनुगत रहता है। दैव संस्कार-यज्ञ में ध्वनीय पुरोडाषादि सम्बन्धी 'सात पाकयज्ञ,' सात ध्वनीय द्रव्य सम्बन्धी यज्ञ, और सात सोम यज्ञ इस प्रकार इक्कीस दैव संस्कार होते हैं। इन संस्कारों से प्राणियों को दिव्य शरीर इस जीवन में प्राप्त हो जाता है, अर्थात् देव प्राणों का शरीर में बहुधा विकास हो जाता है। ब्राह्म संस्कारों से संस्कृत मानव ऋषियों की समानता पाकर ऋषितत्त्व से संयुक्त हो जाता है।

आगे के दैव संस्कारों से क्रमशः संस्कृत होता हुआ मानव देवताओं की समानता पाकर, देवलोक में जाकर, देवों में संयुक्त हो जाता है। ऐसी आचार्यों की वाणी है।

> देव वर्ग में अग्नि, वायु, आदित्य ये तीन देव प्रधान हैं। जैसा कि वेद वचन है "अग्नि सर्व देवमय है, वायु सर्व देवमय है, इन्द्र सर्व देवमय है। सर्व देवमयता का हेतु—क्योंकि उत्पन्न होता हुआ प्राणी इन देवों के अंशों से ही उत्पन्न होता है।"

प्राचीनों का यही वचन है। इन ऋषि-पितृ-देव प्राणों के जीव विभाग का संपादन रूप आरंभ करने वाले रस भाग वैदिक परिभाषा में 'सहस्' कहे जाते हैं। देव विभाग के इन सहस् रूप रसों का परस्पर एक दूसरे में अनुप्रवेश देव यज्ञ से जानना चाहिये जिसका

विशद वर्णन अन्य ग्रन्थ में कर दिया गया है। इस प्रबन्ध में तो पितरों के जो सहस् रूप रस भाग हैं उनका परस्पर अनुप्रवेश का क्रम पितृ-यज्ञ से समुद्धृत व्याख्या का विषय है।

## लोकभेदात्त्रिधा भिन्नानां पितॄणां प्रकृतिभेदात्पुन-स्त्रैविध्यम् ।

पितरस्तावदिह लोकत्रयभेदात्त्रिविधा भवन्ति—परा, मध्यमा, अवराश्चेति । तदुक्तम्—

"उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यास" इति । ते चैते क्रमेण दिव्या ऋतवः प्रेताश्चेति भाव्याः । एषां पुनरेकैके मूलप्रकृतिभेदात्त्रिविधास्त्रिविधा इष्यन्ते—

आग्नेयाः, याम्याः, सौम्याश्चेति । अग्निः, यमः, सोमः—इत्येता हि तिस्रः पितॄणां सहयोगिन्यो देवतास्तेषु भूयसा वैधर्म्यं जनयन्ति । तथा हि—तासान्तावदुत्पत्तिमाख्या-स्यामः ।

## लोक भेद से तीन रूपों में विभक्त पितरों की प्रकृति-भेद होने से पुनः त्रिविधता

पितृगण तीन लोकों के भेद के कारण तीन रूपों में विभक्त हो जाते हैं—

पर पितर, मध्यम पितर, और अवर पितर (अर्थात तीनों में नीचे दर्जे के पितर) जैसा कि "मन्त्र वचन है-सोम प्रधान अवर संज्ञा के पितर पर संज्ञा के पितर जो ऊपर निवास करते हैं और मध्यम वर्ग के पितर वे भी उन्मध्यम कहलाते हैं; वे यहां पधारें।" ये पितर क्रमशः दिव्यपितर, ऋतुरूप पितर और प्रेतपितर समझे जाने चाहिये, इनके भी फिर मूल प्रकृति के भिन्न-भिन्न होने के कारण जो कि उन लोकों से सम्बद्ध होती है, तीन रूप में विभक्त माने जाते हैं। अग्नि से सम्बन्ध रखने वाले आग्नेय, यम से सम्बन्ध रखने वाले याम्य, और चन्द्र से सम्बन्ध रखने वाले सोम्य कहे जाते हैं। अग्नि, यम, सोम ये तीनों पितरों के सहयोगी देवता हैं ये ही बहुधा विरुद्ध धर्मो को उत्पन्न करते हैं। इन पितरों की उत्पत्ति की व्याख्या की जाती है।

## ऋतसत्यभेदाभ्यां पितृसृड्ब्रह्मणो द्वैरूप्यम् ।

प्राणः । आपः । वाक् । अन्नादः । अन्नम् । इति पञ्च ब्रह्माणि प्रकृतयः । तत्रैतत्—प्राणब्रह्म पितृसृष्टिमैच्छत् । अतप्यत । अश्राम्यत् । तस्यैतस्य तपस

ऋतं च सत्यं चाध्यजायेताम्। अहृदयमशरीरमृतम्। सहृदयं सशरीरं सत्यम्। तत्रेदमृतं ब्रह्मगति-प्रकृतिकं स्वतोऽप्रतिष्ठितमं यतः प्रतिष्ठामाप्नोति। अथ सत्यं स्थिति-प्रकृतिकं ब्रह्मेति कृत्वा प्रतिष्ठास्वभावमन्यतः सञ्चारं लभते। समन्वयात्तु तयोर्ब्रह्मणोः प्रत्यर्थमेते स्थितिगती सम्भवतः। तत्तद्वैशेष्यापेक्षयैव चैषामशेषाणां प्रतिष्ठितत्वाऽप्रतिष्ठितत्वव्यपदेशा भिद्यन्ते। न सा स्थितिरस्ति यत्र गतिर्नास्ति। न च सा गतिरस्ति यत्र स्थितिर्नास्ति। प्रतिष्ठितानामप्यवयवा नित्यमविरामं विस्रसन्ते। उत्सन्नपूर्वाशेषावयवोऽप्येष यथापूर्वं प्रतितिष्ठन्नेवोपलभ्यते। यथेदं शतं वर्षाणि शरीरम्। अथैवं ये स्थितस्य गच्छन्तोऽवयवाः, ये वा सर्वथा शरीरावयवैरुत्क्रान्तास्तेषामप्रतिष्ठितानामपीतश्चेतश्चावश्यं क्वचित् प्रतिष्ठाऽनुभूयते। यदस्ति तदुत्सादेऽपि नैकान्ततस्तन्नास्तीति सम्भवति। देशकाल-रूपभेदैस्तस्य स्थितेर्विज्ञायमानत्वात्।

"नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः॥" गीता २/२६

इति स्मरणाच्च।

## ऋत और सत्य के भेद से पितरों की सृष्टि करने वाले ब्रह्म की द्विरूपता।

प्राण, आप, वाःक् अन्नादि, और अन्न ये पांच ब्रह्म के रूप प्रकृति नाम से कहे जाते हैं। इनमें सबसे पहला प्राण रूप ब्रह्म, पितरों की सृष्टि की इच्छा करता है। उस प्राणमय ब्रह्म ने तप किया, वह थक गया उसकी इस तपस्या से ऋत और सत्य ये दो भाव उत्पन्न हुए, जिस पदार्थ का कोई हृदय (केन्द्र) या शरीर न हो-वह ऋत भाव में होता है। और हृदय सहित शरीर-धारी सत्य कहा जाता है। उसमें ये ऋतभाव ब्रह्म रूप गति वाला अर्थात् ब्रह्ममय प्रकृति रूप होने के कारण स्वयं प्रतिष्ठित होने की योग्यता न रखने के कारण अर्थात् ब्रह्म के सर्वत्र व्यापक स्वभावी होने से कहीं उसकी एकबद्धता नहीं हो सकती। एक रूपता की प्रतिष्ठा के लिए वह अन्य द्वारा ही प्रतिष्ठा पाता है।

इसके अतिरिक्त सत्य सर्वथा स्थिति प्रकृति वाला ब्रह्म होता है अतः वह स्वभाव से प्रतिष्ठा स्वभावी होता हुआ भी संचरण रूप गति दूसरे से ही प्राप्त करता है। इस स्थिति और गतिभाव का एकत्र समन्वय होने से प्रत्येक पदार्थ में ये स्थिति गति व्याप्त हो रहे हैं। पदार्थों की विशेषता की अपेक्षा को लेते हुए ही इन अशेष रूपों के प्रतिष्ठित होने के कारण अमुक प्रतिष्ठित है, अमुक अप्रतिष्ठित है यह व्यवहार भेद हो जाता है। संसार में ऐसी कोई स्थिति नहीं है जिसमें गति न हो, और न ही ऐसी कोई गति है जिसमें स्थिति न हो, जो पर्वत आदि सर्वथा प्रतिष्ठित से दिखाई देते हैं उनके भी अंश सदा खिरते रहते हैं, और पहले के अवयवों के नष्ट हो जाने पर भी वह पर्वत आदि पदार्थ पहले के समान प्रतिष्ठित ही

उपलब्ध होते रहते हैं—जैसे सौ वर्ष तक यह मानव शरीर स्थिति-शील पदार्थ में से जो अंश निकल रहे हैं अथवा शरीर के अवयवों को छोड़कर जो अलग ही गए हैं—उनकी भी कहीं न कहीं प्रतिष्ठा रूप स्थिति अनुभूत होती है जो मौजूद है उसका सर्वथा अभाव हो जाए ऐसा कभी संभव नहीं है, देश काल और रूप भेद से उसकी कहीं न कहीं स्थिति अवश्य रहती है जैसा कि गीता में भगवद् वचन है—

> "असत् (अभाव) से कभी भाव नहीं हुआ करता और सत् का कभी अभाव नहीं हुआ करता, इन सत् और असत् का सिद्धान्त तत्त्वदर्शी ऋषियों ने अच्छी प्रकार परख लिया है (वेद की परिभाषा में असत् नाम प्राण का है अभाव का नहीं अतः प्राण रूप सत् भाव से ही सत् की सृष्टि होती है यह गीता में उचित ही कहा गया है।"

## ऋतसत्यमयस्य त्वेकस्यैवाक्षरस्य वृत्तिभेदेन त्रैविध्यात्त्र्यक्षरहृदयत्वम् ।

अस्ति हि सत्ता विधृतिर्धृतिरित्येवं त्रिविधाः प्रतिष्ठा इष्यन्ते । आत्म-प्रतिष्ठा सत्ता । समवायसम्बन्धेन द्रव्यगुणकर्मणामन्यत्र प्रतिष्ठा विधृतिः । संयोगसम्बन्धेन द्रव्ये द्रव्यान्तरप्रतिष्ठा धृतिः । तथा चेह यन्निबन्धनमस्तीति बुद्धिः प्रत्यर्थमुपपद्यते तदिदं प्रतिष्ठा ब्रह्म । यदस्ति तत्सत्यम् । तच्चावश्यमृत-समन्वयाद् वृत्तित्रयेण युज्यते हरति द्यति यच्छतीति । अन्यतः किञ्चित्सत्यमृतं वाऽऽत्मन्याहरति । प्रतिक्षणं स्वाङ्गानामवदानं करोति । स्वात्मनि चाहितान्य-ङ्गानि नियमयति नियत्या विधारयति । आहरणावच्छिन्नं ब्रह्म हरिः । सोऽन्तर्वि-शति अन्तर्व्याप्नोति इति विष्णुर्नाम । निर्हरणावच्छिन्नं ब्रह्म हरिः । स इन्धे उद्दीपयतीति इन्द्रो नाम । अथ यः प्रतितिष्ठन् प्रतिष्ठापयति स बिभर्ति धारय-तीति भरणोद्भर्मा भूत्वा पारोक्ष्याद्ब्रह्मा नाम हरयोर्विपर्ययः पारोक्ष्यम् । तद् यथाभर्मा=ब, ह, अ, र, म, अन्-भर्मन् । ब्रह्मा=ब, र, अ, ह, म, अन्-ब्रह्मन् स्थितिस्वभावो ब्रह्मा । गतिस्वभावौ त्विन्द्राविष्णू । उत्क्षेपणमिन्द्रः । अवक्षेपणं विष्णुः । एक एवाक्षरो वृत्तिभेदात्त्रिविधो व्यवतिष्ठते । हरति द्यति यच्छतीति त्र्यक्षरेऽस्मिन् प्रतिष्ठा ब्रह्मणि त्र्यक्षरो हृदयशब्दः ।

## ऋतसत्य रूप एक ही अक्षर की व्यवहार भेद से त्रिरूपता हो जाने से तीन अक्षर-भाव-युक्ता हृदयता

पदार्थ मात्र के अस्तिभाव में सत्ता, विधृति, धृति तीन प्रकार की प्रतिष्ठा मानी जाती है। आत्मा की चेतना रूप ज्योति से जिस जीवन अवस्था का अन्त तक

"मैं जीवित हूं" इस रूप में अनुभव किया जाता है— वह आत्मा की प्रतिष्ठा-सत्ता कही जाती है। दूसरे विधृति प्रतिष्ठा भाव में द्रव्य-गुण तथा कर्मों का समवाय रूप नित्य सम्बन्ध अन्य स्थान में प्रतिष्ठित हो जाना है। तीसरे धृति-रूप प्रतिष्ठा-भाव में संयोग सम्बन्ध से एक द्रव्य (पदार्थ) को अन्य द्रव्य के साथ जोड़ दिया जाता है—वहां प्रथम द्रव्य में द्रव्यान्तर की प्रतिष्ठा धृति भाव में होती है। स्पष्ट यही है कि संसार में प्रत्येक पदार्थ को देखकर जिस आन्तर भाव से "अमुक पदार्थ है" यह अस्तित्व-बुद्धि जागृत होती है वह आन्तर भाव ही तो 'प्रतिष्ठा ब्रह्म' है। एवं जिसकी 'अस्ति' कहकर सत्ता बनाई जा रही है—वह सीमाबद्ध 'सत्य' है। यह 'सत्य' सदा 'ऋत' से जुड़ा रहता है—अतः ऋत से सम्बद्ध तीन भिन्न-भिन्न वृत्ति भी सत्य से संयुक्त हो जाती हैं।

(जीवन काल में बाहरी दृश्य भावों से अतिरिक्त जो शरीर के आन्तर सूक्ष्म शरीर भाव होते हैं—जिनका आधार पाकर दृश्य भाव संचलित होते हैं, उन भावों का विशकलन किया जा रहा है )

सूक्ष्म शरीर के अधिष्ठाता विष्णु वा हरि प्राण, इन्द्र प्राण, तथा ब्रह्मा प्राण प्रधान हैं, उनकी तीन वृत्ति (व्यवहार) हैं)। हरति, द्यति, यच्छति अर्थात् जीवन अवस्था में अन्य स्थान से आत्मपोषण के लिए सत्य रूपेण कुछ सीमित या ऋत रूपेण कुछ व्यापक अपने भीतर आहरण किया जाता है। दूसरी ओर प्रतिक्षण अपने अङ्गों का अंश निकाल कर दे दिया जाता है और अपने में जो अन्यत्र से आकर अङ्ग भाव रूप बन गया है उसका नियमन करता है अर्थात् प्रकृति नियमों का पालन करते हुए उनका विधारण करता है। इनमें आत्म पोषणार्थ अभीष्ट को अन्यत्र से लाने वाले प्राण रूप ब्रह्म भाव को हरि कहा जाता है—'आहरणात्-हरिः'। यह आहरण स्वभावी हरि प्राण भीतर प्रविष्ट होकर सर्वत्र अन्तर्भाव में व्याप्त हो जाता है—अतः 'विशतीति-विष्णुः' इस व्युत्पत्ति से इस हरि प्राण को विष्णु भी कहा जाता है।

अपने अङ्गांशों को प्रतिक्षण पृथक करते रहने वाले प्राण ब्रह्म को भी 'हरि' कहा जाता है। यह प्राण उद्दीपन रूप इन्धन करता है—अतः इसे इन्द्र कहा जाता है।

तीसरा प्राण जो स्वयं सदा सुप्रतिष्ठित रहता हुआ अन्य प्राणों को प्रतिष्ठित करता है वह सबको भरण करता हुआ धारण करता है अतः भरण करने के कारण भर्मा नामधारी बन कर पीछे ब्रह्मा कहलाया। (देवता परोक्ष प्रिय होते हैं—अतः ब्रह्मा परोक्ष भाषा का शब्द है—वास्तव में इसका अन्वर्थ नाम भर्मा है।)

हकार और रकार का विपर्यय हो जाता है। यह परोक्ष-वृत्ति है। यथा भर्मा= ब ह अ र म, अन्-भर्मन्। ब्रह्मा = ब, र, अ ह म, अन्-ब्रह्मन्। ब्रह्मा स्थिति स्वभावी हैं, इन्द्र और विष्णु गति स्वभावी हैं। ऊपर क्षेपण करने वाले इन्द्र, नीचे क्षेपण करने वाले विष्णु।

इस प्रकार एक ही अक्षर प्राण वृत्ति भेद से तीन रूपों में व्यवस्थित हो रहा है—आहरण करने वाला, छांटकर पृथक् करने वाला, तथा सबको प्रतिष्ठा दान करने वाला। इस प्रक्रिया से तीन अक्षर रूप इस प्रतिष्ठा ब्रह्म में तीन अक्षरों वाला यह हृदय शब्द समुचित होता है। (हृदय के हृ-द-य ये तीन अक्षर भी तीन धातुओं का स्पष्टीकरण कर रहे हैं—हृ धातु से आहरण-विष्णु, दो-अवखण्डनार्थक धातु का 'द' इन्द्र, यच्छ दानार्थक धातु का य-ब्रह्मा; हृ-द-य। उक्त तीन प्राण ही मुख्य हृदयरूपेण माने गए हैं।)

## ऋतवशात्सत्ये नाभिप्रधिनामकभावद्वयोपपत्तिः।

ऋतान्यन्नम्। सत्यमन्नादम्। हृदयमृतानां नाभिः। नाभिं परितः खल्वेषामृतानां नद्धभावेन प्रतिष्ठानात्। तच्चेदमृतं यावता प्रदेशेनास्मिन् सत्ये प्रधीयते सा बहिः सीमा प्रधिः। तं प्रधिमिदं हृदयं स्पृशतीति प्रधौ पृष्ठशब्दः। हृदयं वा सर्वतः पृत्वा तिष्ठतीति पृष्ठं प्रधिः। सत्यस्य हीदं रूपं यदिदं हृदयं नाभिः। ऋतस्य तु सत्य-परमेष्ठिनो यद्रूपं तत्पृष्ठं प्रधिः। सर्वं हीदं सत्यमृतेन गर्भितत्वात्स्वरूपं धत्ते। सत्येन हीदमृतं गर्भितं ध्रियते। सर्वं च सत्यमृतेन बहिर्धा परिश्रितं भवति। तथा चाम्नायते—"**ऋतं सत्येऽधायि। सत्यमृतेऽधायि ऋतं च सत्यं च मेऽभूतामिति**" ऋतं वा पूर्वं पश्चात्सत्यमथवा सत्यं पूर्वं पश्चादृतमित्यचिन्त्यम्। सहैव तु "**ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायतेति**" सिद्धान्तः।

## ऋत के वशीभूत सत्य में नाभि-प्रधि नामके दो भावों की उपपन्नता।

सारे अन्न ऋत रूप में बिखरे होते हैं। अन्न को खाने वाला 'अन्नाद' सत्य भाव में स्थिति पाता है। हृदय रूप से धारण किये गए भाव में नाभि शब्द का व्यवहार होता है। नाभि के चारों ओर ही निश्चित रूप से ऋतभाव रूप अन्नों के बंध जाने से उनकी प्रतिष्ठा होती है। अर्थात् बिखरा हुआ ऋत भावमय अन्न सत्यभाव में प्रतिष्ठित हो जाता है। ये ऋत भाव जितना प्रदेश घेर कर सत्य में विशेषतया स्थापित किया जाता है—उसकी वह बाहरी सीमा 'प्रधि' कही जाती है। उस प्रधि का यह सत्य भावगत हृदय स्पर्श करता है अतः स्पर्श करने कारण प्रधि के लिए पृष्ठ शब्द का व्यवहार होता है। अथवा यह भी कहा जा सकता है कि 'हृदय' सब ओर फैलता हुआ प्रतिष्ठित हो रहा है—उसका पृष्ठ भाग प्रधि है। सत्य का निश्चित रूप तो यही है कि उसका केन्द्र हृदय अथवा नाभि होता है। परमेष्ठिमण्डल-गत सत्य-भाव हमारी अपेक्षा से ऋत है उसका जो रूप है—वह ही पृष्ठ वा प्रधि है। यह सम्पूर्ण सत्य-भाव ऋत से गर्भित होने पर सत्य रूपता धारण करता है, एवं च सत्य के द्वारा वह ऋत भी गर्भित होकर टिका रहता है। ये संपूर्ण सत्य (सीमाबद्ध) पदार्थ ऋत से बाहर

की ओर चारों तरफ से घिरा रहता है, अर्थात् ऋत के आधार से ही सत्य की स्थिति बनती है। जैसा कि वेद वचन है—

"ऋत सत्य में धृत है तथा सत्य ऋत में धृत है। ये ऋत और सत्य दोनों मुझ को प्राप्त होवें।"

ऋत भाव पहले है तदनन्तर सत्य है, अथवा सत्य भाव पहले है तदनन्तर ऋत है यह विषय ज्ञान सीमा से बाहर है अर्थात् अचिन्त्य है। वैदिक प्रमाण के अनुसार तो ऋत और सत्य साथ-साथ ही प्राण के तप से होते हैं, यह सिद्धान्त माना गया है।

## ऋतसत्यरूपयोः सोमाग्न्योरक्षरवैशेष्याद्वै लक्षण्यम्।

यत्तावदग्रे सत्यमजायत सोऽग्निः। यदृतं तत्सत्यस्वरूपावताराय सूयते तस्मात् सोमः। ब्रह्मेन्द्रयोर्भिन्नभावयोः सहयोगेनैकभाव्यमयमग्निर्नाम ब्रह्मा। एवं ब्रह्मविष्ण्वोरैकभाव्यं स सोमो नाम ब्रह्मा। बहिर्गतिगर्भिता प्रतिष्ठा विकासः। तद्वृत्तिर्ब्रह्माऽयमग्निर्हृदयारब्धः पृष्ठावसानो बहिर्मुखः। अथान्तर्गतिगर्भिता प्रतिष्ठा सङ्कोचः। तद्वृत्तिर्ब्रह्मायं सोमः पृष्ठारब्धो हृदयावसानोऽन्तर्मुखः। स्थितिगतिस्वभावौ हीमौ ब्रह्माणौ। आकुञ्चनं सोमः। प्रसारणमग्निः।

## ऋत-सत्य रूप सोम-अग्नि की अक्षर पुरुष की विशेषता के कारण विलक्षणता।

जो सबसे पहले सत्य बना वह अग्नि है। जो ऋत है वह सत्य के आकार को प्रस्तुत करने के लिए प्रसव करता है, इस सवन के कारण उसे सोम कहा जाता है। ब्रह्मा और इन्द्र का स्वभाव भिन्न-भिन्न है। (ब्रह्मा प्रतिष्ठा स्वभावी है, इन्द्र प्रदीप्त करने वाला गति स्वभावी है)। इन दोनों विभिन्न स्वभावियों के सहयोग से जो एक रूप बनता है यह अग्नि नाम का ब्रह्मा है। इसके अतिरिक्त अक्षर में परिगणित ब्रह्मा और विष्णु का सहयोग बनकर जो एक भाव होता है वह सोम नाम का ब्रह्मा है। बाहर प्रकट होने रूप गति जिसके गर्भ में हो ऐसी प्रतिष्ठा को विकास कहा जाता है। इस प्रतिष्ठा भाव के स्वभावी ब्रह्मा जो अग्नि रूप में हृदय रूप उक्थ स्थान से प्रकट होकर पृष्ठ भाग के अन्त पर्यन्त बहिर्मुख रहते हैं। उक्त विकास भाव के विपरीत बाहर से भीतर जाने का प्रतिष्ठा का नाम संकोच है। अन्तर्मुखी वृत्तिवाला सोम-ब्रह्मा पृष्ठ से आरम्भ होकर हृदय तक पहुँचता है एवं अन्तर्मुख भी होता है। ये ब्रह्मा स्थिति स्वभाव एवं गति स्वभाव होते हैं। सोम संकोचन, अग्नि प्रसारण है।

## अग्निरूपत्रैविध्यम् ।

सोऽयं प्रसरणस्वभावोऽग्निरनारतं हृदयाद्बहिर्बहिश्चीयते । तस्मिंश्चयने सवनत्रैविध्यादग्नेस्त्रैभाव्यं निष्पद्यते—अग्निः, वायुः, आदित्य इति । विकासतः प्राग्रूपमग्निः । प्रथमो विकासो वायुः । पुनर्विकासो नितान्तविरलावयव आदित्यः । सूक्ष्मोत्तरा ह्रीमे त्रयो भावाः । त्रयोऽप्यमी ऋषयः प्राणा अङ्गिरसो नाम ज्ञायन्ते । अङ्गिनोऽर्कप्रजापतेर्हृदयस्य रसनेन स्रंसनेनैतद्रूपत्रयपरिनिष्पत्तेः ।

### अग्नि की तीन रूपों में परिणति ।

प्रसरण अर्थात् फैलने का स्वभाव रखने वाला अग्नि हृदय से बाहर अनवरत संचित होता है । इस चयन क्रम में तीन प्रकार का सवन होने से अग्नि के तीन भाव बन जाते हैं—अग्नि, वायु और आदित्य । विकास का पूर्व रूप अग्नि है । पहला विकास वायु है फिर अन्तिम विकास आदित्य है जिसके अवयव विरल अवस्था में रहते हैं—घन, तरल, विरल इन तीन अवस्थाओं में तीसरी अवस्था विरल है । इन तीनों रूपों में आगे-आगे के रूप सूक्ष्म होते हैं अर्थात् अग्नि से वायु सूक्ष्म है और वायु से आदित्य । ये तीनों ही ऋषिप्राण अङ्गिरस नाम से जाने जाते हैं । प्रधान अङ्गी अर्क नाम के प्रजापति के हृदय के रस के स्रंसन से अर्थात् नीचे गिरने से ये तीन रूप बनते हैं ।

## सोमरूपत्रैविध्यम् ।

अथाकुञ्चनस्वभावोऽय सोमोऽनुक्षणं पृष्ठादन्तरतश्चीयते । तत्र सवनत्रैविध्यात् सोमत्रैभाव्यं भवति—सोमो, वायुः, आप इति । सङ्कोचतः प्राग्रूपं नितान्तविरलावयवं सोमः । प्रथमः सङ्कोचो वायुः । पुनः संकोच आपः । स्थूलोत्तरा ह्रीमे त्रयो भावाः । तेऽमी भृगवो नामर्षयः प्राणाः संज्ञायन्ते । पर परं भरिष्यन्तो गच्छन्तीति व्युत्पत्तेः । तथा चेदं षाट्कौशिकं पृथ्वीरूपं भवति । अग्निः, वायुः, आदित्य इति हृदयारब्धाः पृष्ठावसानास्त्रयः कोशाः । सोमो वायुः आपः इति पृष्ठारब्धा हृदयावसानास्त्रयः कोशाः ।

### सोम के तीन रूप ।

संकोचन स्वभाव वाला ये सोम प्रतिक्षण पृष्ठभाग के अनन्तर संचित होता है । उसमें भी प्रसव के तीन प्रकार होने के कारण सोम के तीन रूप हो जाते हैं—सोम, वायु

और आपः। प्रथम संकोचन से पहला रूप जिसमें अवयव बिल्कुल बिखरे हुए होते हैं वह सोम अवस्था है उसका प्रथम संकोचन वायु है फिर अन्तिम संकोचन आपः (जल) है। ये तोनों रूप आगे-आगे स्थूल होते जाते हैं अर्थात् सोम से वायु स्थूल हैं और वायु से जल। ये भृगु नाम के ऋषि प्राण रूप में जाने जाते हैं। भृगु शब्द की व्युत्पत्ति करते हैं कि आगे-आगे के रूपों को भरते हुए चलने से इनको भृगु कहते हैं। इस प्रकार अग्नि, वायु, आदित्य तथा सोम, वायु, आपः इन छः कोशों से परिपूर्ण पृथ्वी का रूप होता है। अग्नि, वायु, आदित्य ये नाभि से शुरू होकर प्रधि (पृष्ठ) पर्यन्त के तीन कोश हैं। सोम, वायु, आपः ये पृष्ठ से शुरू होकर नाभि पर्यन्त तीन कोश हैं।

## अग्नीषोमाभ्यां सयुग्भ्यां सृष्टिविशेषसिद्धं रूपं यमः।

अग्निरद्भिः सयुक्समहन्यत। सा पृथ्वी। वायुर्वायुनाऽयुज्यत। तदन्तरिक्षम्। आदित्यः सोमेन ज्योतिरभवत्। सा द्यौः। सोम एवाग्नौ हूयमानः प्रज्वलितः पृथ्वीपिण्डनाभावग्निर्भवति। अग्निरेव स्वप्रसरणातिशयात्पशुभूतः प्रधौ सोमो भवति। अथ यत्रैतयोरग्निसोमयोः समबलयोर्योगादुभयोः सङ्कोचविकासक्रिय-योर्यमनं भवति, सोमसङ्कोचगतिरग्निना तथाग्निविकासगतिः सोमेनोपरम्यते, स विष्टम्भभावो यमः। अग्निर्यमः। अग्निर्द्विविधः—सोमानुबन्धी, सोमप्रतिबन्धी च। आद्यो यज्ञस्तस्याग्निशब्देनैव व्यपदेशः। द्वितीयस्त्वाङ्गिरसो वायुस्तस्य यमशब्देन। स मध्यवर्ती यमोऽयमन्तरतस्तिष्ठन् दक्षिणतोऽग्निं यमयति उत्तरतस्तु सोमं यमयति। नाभिस्थोऽयमधस्तादग्निरूर्ध्वं सर्वतः प्रसरन्सोमस्थानं प्रधिमागत्य सोमो भवति। एवमयं प्रधिस्थः सोमः सर्वतोऽधस्तान्निपतन्नग्निस्थानं नाभिमागत्याग्निः सम्पद्यते।

## अग्नि सोम के सहयोग से हुई विशेष सृष्टि का रूप यम।

अग्नि जल के साथ मिलकर जब संघर्षरत होता है तब पृथ्वी का रूप बनता है। वायु जब वायु से संयुक्त होता है तब अंतरिक्ष बनता है। आदित्य जब सोम से संयुक्त होता है तब वह ज्योतिर्मय हो जाता है, उसको द्युलोक कहते हैं। सोम ही अग्नि में हवन कर दिये जाने पर प्रज्वलित होकर पृथ्वी पिण्ड की नाभि में (केन्द्र) अग्नि हो जाता है। अग्नि ही अपनी प्रसरण क्रिया के अतिशय हो जाने पर पशु रूप बनकर प्रधि में अर्थात् पृष्ठ भाग में सोम रूप बन जाता है। जब कहीं इन समान बल वाले अग्नि, सोम इन दोनों की संकोच विकास क्रिया में रुकावट हो जाती है, तब सोम की संकोच गति अग्नि के द्वारा तथा अग्नि की विकास गति सोम के द्वारा रोक दी जाती है वह रुकावट ही यम कहलाती है। अग्नि का ही रूप यम है। अग्नि दो प्रकार का है सोम से अनुकूल सम्बन्ध करने वाला एक रूप, सोम को

रोक देने वाला दूसरा रूप। पहला रूप यज्ञ है वहां अग्नि शब्द का ही व्यवहार होता है। दूसरा रूप अङ्गिरा से उत्पन्न वायु है उसका यम शब्द से व्यवहार होता है। मध्य अन्तराल में रहने वाला यह यम भीतर रहता हुआ दक्षिण भाग में स्थित अग्नि का यमन करता है और उत्तर भाग में सोम को रोक देता है। नाभि में स्थित रहने वाला यह नीचे का अग्नि ऊपर की ओर सब तरफ फैलता हुआ सोम के स्थान प्रधि अर्थात् पृष्ठ भाग में आकर सोम रूप में बदल जाता है। इसी तरह ये प्रधि (पृष्ठ स्थानगत) सोम सब ओर से नीचे गिरता हुआ अग्नि के मूल स्थान नाभि में आकर अग्नि रूप बन जाता है।

## अग्नियमसोमानां पितृदेवत्वम्।

तेऽमी त्रयोऽग्नियमसोमा देवपितरो भवन्ति। **"त्वमग्ने अङ्गिराः प्रथम ऋषि"** रिति श्रुत्या सर्वेषां देवानामाग्नेयानामङ्गिरस एवोत्पन्नत्वात्। तत्राग्निरङ्गिरसस्तेजनकर्मत्वात् तेजांसि। सोमो भृगवः स्नेहनकर्मणो रसाः। अथ न तेजो न स्नेहः स यमः। तेऽमी त्रयः पितरः।

> **"अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः।** (यजुर्वेद १६-५०)
> **एभिर्यमः संरराणो हवींष्युशन्नुशद्भिः प्रतिकाममत्तु॥"** (यजुर्वेद १६-५१)

इत्यादि श्रुतिभ्यस्तथाऽवगमात्। तत्रैतेऽङ्गिरसोऽवराः पितरः। यमा मध्यमाः पितरः। भृगवस्तु परे पितरः—उपरिष्टात्सतामधश्चारित्वात्। आतश्च श्रूयते—**"उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः।"** इति (ऋग्वेद १०/१५/१)

## अग्नि, यम, सोम का देवता रूप में पितृभाव।

ये तीनों अग्नि, यम, सोम देव पितर माने जाते हैं। **"त्वमग्ने अङ्गिरा"** इत्यादि वेद वचन के द्वारा अग्निसम्बन्धी देवताओं की उत्पत्ति अङ्गिरा से ही मानी गई है। उनमें अङ्गिरा के ज्योति रूप स्वभाव के कारण अग्नि तेजोमय होता है। सोम भृगु के स्नेहन कर्म रूप रसमय होता है। और जो न तेजोमय है, न स्नेह रूप है, वह यम है। ये तीनों ही पितर कहलाते हैं जैसा कि—

> **"अङ्गिरसो नः पितरः"** आदि श्रुति वचन के द्वारा प्रमाणित किया गया। अङ्गिरा अवर लोक के पितर हैं। यम मध्यम लोक के पितर हैं, भृगु उससे ऊपर के परलोक के पितर हैं। वे ऊपर रहते हुए भी नीचे तक संचरण करते हैं। जैसा कि **"उदीरतामवर"** आदि मंत्र में स्पष्ट किया गया है।

## याम्यस्यैकविध्यादाग्नेयसौम्ययोस्तु त्रैविध्यात्पितॄणां साप्तविध्यम् ।

अथ मध्यमोऽयमेको यमस्त्रिभिरङ्गिरोभिस्तेजनैस्त्रिभिर्भृगुभिः स्नेहनैः सप्तसंस्थो भवति । यावदिमे पार्थिवा भावा यावदान्तरीक्ष्या यावद्वा दिव्याः सर्वेऽप्यमी सप्तसंस्थैः पितृभिः कृतशरीरत्वादेकैके सप्तसंस्थाः प्रजायन्ते ।

## यम सम्बन्धीप्राण की एकरूपता से और अग्नि सोम की तीन-तीन रूपता से पितरों के सात रूप ।

मध्यान्तराल में रहनेवाला यह अकेला यम रूप अग्नि अङ्गिरा के तीन तेजोमय रूपों से और भृगुसम्बन्धी तीन स्नेहनरूपों से सात संस्थाओं में व्यापक रहता है । जितने भी ये पार्थिव पदार्थ हैं एवं जितने भी अन्तरिक्ष के पदार्थ हैं और जितने भी द्युलोक के दिव्य पदार्थ हैं ये सभी सात संस्था वाले उपरोक्त पितरों के द्वारा शरीर धारण करने के कारण सात संस्थाओं के रूप में ही उत्पन्न होते हैं ।

## अग्नीषोमयोः पितृदेवयोर्जाबालोक्ता स्वरूपनिरुक्तिः ।

इत्थं पितृस्वरूपारम्भकत्वेनाग्नियमसोमानां त्रैविध्ये प्रतिपद्यमानेऽपि यमस्याङ्गिरोविशेषतया द्वावेवाग्निसोमौ प्रधानतः प्रतिपत्तव्यौ । दक्षिणोऽयं यमोऽग्निः । उत्तरः सोमः । अपि चायमधस्तादग्निरूर्ध्वदिशं गच्छति । उपरिष्ट्-वात्त्वेष सोमोऽजस्रमधोदिशं गच्छति । तथा च बृहज्जाबालोपनिषद्भवति—

अग्नीषोमात्मकं विश्वम्—

अग्निराख्यायते रौद्री घोरा या तैजसी तनूः ।
शक्तिः सोमोऽमृतमयो रसशक्तिकरी तनूः ।। १ ।।
अमृतं यत्प्रतिष्ठा सा तेजो विद्या कला स्वयम् ।
स्थूलसूक्ष्मेषु भूतेषु स एव रसतेजसी ।। २ ।।
द्विविधा तेजसो वृत्तिः सूर्यात्मा चानलात्मिका ।
तथैव रसशक्तिश्च सोमात्मा च जलात्मिका ।। ३ ।।
वैद्युतादिमयं तेजो मधुरादिमयो रसः ।

तेजो रसविभेदैस्तु वृत्तमेतच्चराचरम् ।। ४ ।।
अग्नेरमृतनिष्पत्तिरमृतेनाग्निरेधते ।
अत एव हविः क्लृप्तमग्नीषोमात्मकं जगत् ।। ५ ।।
ऊर्ध्वशक्तिमयः* सोमः अधःशक्तिमयोऽनलः ।
ताभ्यां सम्पुटितं तस्माच्छश्वद्विश्वमिदं जगत् ।। ६ ।।
अग्नेरूर्ध्वं भवत्येषा यावत्सौम्यं परामृतम् ।
यावदग्न्यात्मकं सौम्यममृतं विसृजत्यधः ।। ७ ।।
अत एव हि कालाग्नेरधस्ताच्छक्तिरूर्ध्वगा ।
सोमस्य दहनञ्चोर्ध्वस्याधस्तात्पतनं भवेत् ।। ८ ।।
आधारशक्त्यावधृतः कालाग्निरयमूर्ध्वगः ।
तथैव निम्नगः सोमः शिवशक्तिपदास्पदः ।। ९ ।।
शिवस्योर्ध्वमयीशक्तिरधःशक्तिमयः शिवः ।
तदित्थं शिवशक्तिभ्यां नाव्याप्तमिह किञ्चन ।। १० ।।

(इति जाबालोपनिषदि द्वितीयं ब्राह्मणम्)

* १ अग्निः, तेजनः, तेजः = अधः शक्तिमयः ऊर्ध्ववाही हृदयात्पृष्ठगः। दक्षिण दिक् । २ सोमः, स्नेहनः, रसः = ऊर्ध्वशक्तिमयः अधःपाती पृष्ठाद् हृदयगः । उत्तरा दिक् । अग्निना पृष्ठगतेन सोमसंपत्तिः । सोमेन हृदयगतेनाग्निसंपत्तिः । अग्निस्त्रिविधः—अग्निः, वैद्युतम्, सूर्यः । सोमस्त्रिविधः—सोमः, वायु, आपः ।

## अग्नि सोम रूप पितर और देवों की जाबाल ऋषि कथित—स्वरूप विवेचना।

इस प्रकार पितरों के स्वरूप के आरम्भक होने के कारण अग्नि, यम और सोम के तीन भावों का प्रतिपादन करने पर भी यम अङ्गिरा का ही विशेष रूप है । अतः दो अग्नि सोम ही प्रधानतः समझने चाहिये । दक्षिण भाग का ये यम अग्नि है । उत्तर भाग का सोम है, दक्षिण भाग का ये नीचे रहने वाला अग्नि ऊपर की ओर जाता है । ऊपर से आनेवाला ये सोम निरन्तर नीची दिशा की ओर आता है । जैसा कि वृहज्जाबालउपनिषत् में कहा गया है—अग्नि सोममय यह सारा विश्व है—

रौद्र भाव का घोर रूप जो तेजोमय शरीर है वह अग्नि कहलाता है और रस रूप शक्तिधारी शरीर वाला अमृतमय सोम है वह शक्ति नाम से प्रसिद्ध है ।। १ ।।

प्रतिष्ठा भाव को अमृत कहते हैं वही तेज, विद्या तथा कला रूप है स्थूल और सूक्ष्म सारे भूतों में वही रस और तेज के रूप में व्याप्त हो रहा है । ।। २ ।।

तेज का स्वभाव दो प्रकार का है एक सूर्य रूप और एक अग्नि रूप। वैसे ही रस शक्ति रूप सोम दो प्रकार का है एक सोम रूप एक जल रूप। ।। ३ ।। विद्युत् आदि तेज के रूप हैं मधुर आदि रस के रूप हैं, इन तेज और रस के भेदों से ये चराचर जगत् बना है। ।। ४ ।।

अग्नि से अमृत (सोम) बनता हैं और अमृत से अग्नि की वृद्धि होती है। अतएव प्रकृति यज्ञ में सोम को हविष रूप दिया गया है। और इस जगत् को अग्नि सोममय कहा गया है। ।। ५ ।।

ऊपर का शक्ति रूप सोम है, नीचे का शक्ति रूप अग्नि है इन दोनों से ये सारा जगत् संपुटित हो रहा है। ।। ६ ।।

अतएव सोम रूपा ये शक्ति अग्निमय शिव के ऊपर विराजमान रहती है। और ये अग्नि अमृतमय सोम के पृष्ठभाग तक जाता है। और ऊपर से ये अमृतमय सोम नीचे गिरता हुआ नाभिस्थ अग्नि तक पहुंचकर अग्निमय हो जाता है। ।। ७ ।।

इसीलिए कालाग्निरूप नीचे विराजमान शिव के ऊपर ऊर्ध्वगामिनी शक्ति रहती है। ऊर्ध्वगामी अग्नि में सोम का प्रज्वलन होता है और ऊपर से सोम का पतन होता रहता है। ।। ८ ।।

आधार शक्ति रूप प्रतिष्ठा द्वारा धारण किया गया यह कालाग्नि सदा ऊर्ध्वगामी होता है वैसे ही सोम निरन्तर नीचे गिरता रहता है। इसी भाव को शिव-शक्ति नाम से जाना जाता है। ।। ९ ।।

शिव के ऊपर सदा शक्ति विराजमान रहती है अर्थात् शक्ति भाव सदा ऊपर रहता है तथा नीचे का शक्तिभाव अर्थात् प्रतिष्ठाभाव शिव रूप होता है इस तरह शिव और शक्ति के द्वारा ये सारा संसार व्याप्त हो रहा है। संपूर्ण संसार में ऐसा कहीं कुछ भी नहीं है जहां शिव शक्ति व्याप्त नहीं हो। ।। १० ।।

यह जाबाल उपनिषत् में दूसरे ब्राह्मण का भाव बताया गया।

## वसुरुद्रादित्यभेदादर्काग्नित्रैविध्ये वसुभेदाः।

तत्राग्निर्वायुरादित्य इत्यर्को नामाग्निस्त्रिविधो व्याख्यातः। तेष्वग्निभेदेषु पृथ्वीलोकायतना अग्निविशेषास्तावदष्टौ वसवो नाम देवा द्रष्टव्याः।

"ध्रुवो धरश्च सोमश्च आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ।।"

(इति पौराणिकाः)

"अग्निश्च पृथ्वी च । वायुश्चान्तरिक्षं च । आदित्यश्च द्यौश्च । चन्द्रमाश्च नक्षत्राणि च । एते वसवः । एतेषु होदं वसु सर्वं हितम्" इति श्रुतिः । (बृ० उ० ३ । ९ । ३) पृथ्वी, अन्तरिक्षं, द्यौः, नक्षत्राणि—इति प्राणोपहितानि वाचोरूपाणि । अग्निः, वायुः, आदित्यः, चन्द्रमाः—इति वाग्विधरणानि प्राणरूपाणि । चतुर्विधं खं वाग्रूपम् चतुर्विधं कं प्राणरूपम्—इत्यष्टौ सोमाश्रिताग्निरूपा वसवः ।

## वसुरुद्र आदित्य भेद से अर्काग्नि के त्रिविध हो जाने के कारण वसुरूप अग्नि के भेद ।

अग्नि, वायु आदित्य रूप में अर्क नाम का अग्नि तीन प्रकार का व्याख्यात हुआ है । उनमें अग्नि के भेदों में पृथ्वी लोक के आधारभूत विशेष अग्नि आठ वसु नाम के देवता समझने चाहियें । पुराणों में इनके नाम ध्रुव, धर, सोम, आपः अनिल, अनल, प्रत्यूष और प्रभास कहे गये है, वेद में (बृ. उ. ३ । ६ । ३) इनके नाम इस प्रकार कहे गये हैं अग्नि और पृथ्वी । वायु और अन्तरिक्ष । आदित्य और द्युलोक । चन्द्रमा और नक्षत्र ये वसु (वसु नाम धन का है) हैं । इन आठों में सारे विश्व का धन रखा गया है । इनमें पृथ्वी, अन्तरिक्ष, द्युलोक और नक्षत्र ये प्राणों से घिरे हुए वाक् के रूप हैं । अग्नि, वायु, आदित्य और चन्द्रमा ये वाक् को धारण करने वाले प्राण के रूप हैं । चार प्रकार का खं (आकाश) वाक् का रूप है, और चार प्रकार का कं (अग्नि) प्राण का रूप है । (अन्यत्र यह स्पष्ट किया जा चुका है कि वेद वचन **"यदेव कं तदेव खं"** कहकर कं और खं की एकरूपता बतायी गयी है ।) इस प्रकार सोम के आश्रित अग्नि के रूप आठ वसु हैं ।

## रुद्रभेदाः ।

अथायमग्निरवस्थाभेदात्पञ्चधा भवति—रुद्रः, वरुणः, इन्द्रः, मित्रः ब्रह्मा चेति—इति वाजिश्रुतावग्निहोत्रे अग्न्युपस्थाने श्रूयते । तत्रायमग्निर्वायुमयो रुद्रः । आपोमयो वरुणः, तेजोमय इन्द्रः, सोममयो मित्रः, प्राणमयो ब्रह्मा—इति भाव्यम् । एषु चैते रुद्रा नाम देवा वायुमयाग्नित्वादन्तरिक्षलोकायतना भवन्ति । ते चैते जन्मना च कर्मणा च विशेषिताः सन्तः, एकादशविधा उपपद्यन्ते । अपि चैते इन्द्रसोमाग्नीनामक्षराणामैकभाव्येन कृतरूपा आविर्भूय दृष्टिमायान्तीति

कृत्वा सूर्यचन्द्राग्निनेत्रतया त्रिनेत्रा उच्यन्ते । अथ रोदस्यां नामैतस्यां त्रिलोक्यां कठिनद्रव्याणि द्रवीकुर्वाणाः परितः पशूनभिरक्षन्ति । नीललोहिता अपि ते शोचिःकेशतया शुचिवर्णा उच्यन्ते । अप्येते वायवश्चतुःकर्माणः सन्तीति चतुर्हस्ता इष्यन्ते । दुष्टान् विनाशयन्तीति शूलहस्ताः परशुहस्ताःवा । आर्तानां सर्वविधा आर्तीः संहृत्य रक्षन्तीत्यभयहस्ताः । स्वस्थानामभ्युदयं कुर्वन्तीति वरहस्ताः । इतोऽतिरिक्ता अपि जगतोऽप्रत्यक्षाः सूक्ष्मा विज्ञातुमशक्या मृग्या नानाभावाः क्रियन्ते इति मृगहस्ताः । इति भाष्यम् । अथ अनन्ता हीमे पञ्चवक्त्रा भवन्ति—अधियज्ञमुखाः, अधिभूतमुखाः, अध्यात्ममुखाः अधिदैवतमुखाः, अध्यन्तरिक्षमुखा इति भेदात् । ते यथा—

## रुद्र के भेद ।

(श्राद्ध की प्रक्रिया में पिता, पितामह, और प्रपितामह की क्रमिक संस्था वसु, रुद्र तथा आदित्य रूप से व्यवहृत होती है । पितृ संस्था से ही देव तथा मानवों की सृष्टि कही गई है । अतः ये वसु रुद्र आदि देवता संस्थाओं में रहते हुए मानव संस्था के उपकारक होते हैं । उनमें वसुओं के भेद का स्पष्टीकरण ऊपर किया गया अब रुद्र भाव की विवेचना प्रस्तुत है ।)

आगे यह अग्नि अवस्था भेद से पांच प्रकार का हो जाता है—रुद्र, वरुण, इन्द्र, मित्र और ब्रह्मा यह विषय वाजिश्रुति अग्निहोत्र में अग्नि के उपस्थान में सुना जाता है । उनमें ये अग्नि वायुमय होकर रुद्र कहलाता है, आपोमय (जलरूप) होकर वरुण कहलाता है, तेजोमय दीप्ति रूप में इन्द्र कहलाता है, सोममय होकर यह मित्र कहा जाता है और प्राणमय होकर यह ब्रह्मा बनता है—ऐसा समझना चाहिये । इनमें ये रुद्र नाम के देवता वायुमय अग्नि रूप होने के कारण अन्तरिक्ष लोक को अपना स्थान बनाते हैं । ये अपने जन्म और कर्म की विशेषता के कारण ग्यारह प्रकार के हो जाते हैं । (जो कि एकादश रुद्र नाम से विख्यात हैं ।) और ये रुद्र, इन्द्र, सोम, अग्नि नाम की अक्षर पुरुष की तीन कलाओं की एकरूपता हो जाने से स्वयं रूप ग्रहण करके आविर्भूत होकर दृष्टिपथ में आते हैं, इस कारण सूर्य, चन्द्र, अग्नि ये तीन इनके नेत्र माने जाते हैं (सूर्य से इन्द्र, सोम से चन्द्र, अग्नि से अग्नि का तात्पर्य है) अतः रुद्र त्रिनेत्र माने जाते हैं । (इनके भिन्न भिन्न क्रियाकलाप बताये जा रहे हैं) पृथ्वी, अन्तरिक्ष और सूर्य इस त्रिलोकी का नाम रोदसी त्रिलोकी है । इस त्रिलोकी में कठोर पदार्थों को पिघलाते हुए द्रुत भाव में लाकर सब ओर से पशुओं की रक्षा ये रुद्र करते हैं, यद्यपि ये रुद्र नील तथा रक्त वर्ण के हैं तथापि चमकीले केश वाले होने के कारण ये श्वेत वर्ण के कहे जाते हैं साथ ही ये वायु रूप रुद्र चार कर्म करने वाले होते हैं अतः चार हाथ वाले माने जाते हैं । दुष्टों का विनाश करने के कारण त्रिशूलहस्त माने जाते हैं अथवा परशुहस्त (फरसा) माने जाते हैं ।

दुःखी जनों के सब प्रकार के दुःख का हरण करके उनकी रक्षा करते हैं अतः अभयहस्त माने जाते हैं। स्वस्थ उपासक जनों का अधिक अभ्युदय करने के कारण वरहस्त कहलाते हैं। इनके अतिरिक्त भी जगत् में नहीं दिखाई देने वाले अति सूक्ष्म नानाभाव जो ज्ञान सीमा में नहीं लाये जा सकते अतः मृग्य (खोजने योग्य) हैं इस कारण चौथे हाथ में मृग बालक पकड़े होने के कारण मृगहस्त माने जाते हैं—ये समझना चाहिये। ये रुद्र अनन्त हैं तथा पंचमुख हैं—अधियज्ञमुख (प्रकृति यज्ञ के संचालक) अधिभूतमुख, (भूत संस्था के संचालक) अध्यात्ममुख (इन्द्रिय मन बुद्धि आदि के संचालक) अधिदैवतमुख, (शरीरस्थ प्राण रूप देव संस्था के संचालक) और अन्तरिक्ष मुख (वायु रूप में संचरित रहने वाले) ये रुद्र होते हैं जिनको कि आगे परिलेख (नक्शा रूप) में स्पष्ट किया जा रहा है—

| | | | | | |
|---|---|---|---|---|---|
| १ कृशानुः (आ) | १ पृथ्वीमूर्तिः (शिवः) | १ श्रोत्रम् | श्रोत्रम् | विरूपाक्षः | प्रभ्राजमानः |
| १ प्रवाहणः (धि.) | २ जलमूर्तिः (शिवः) | २ श्रोत्रम् | त्वक् | रैवतः | व्यवदातः |
| २ दुवस्वान् (धि.) | ३ तेजोमूर्तिः (शिवः) | ३ चक्षुः | चक्षुः | हरः | वासुकिः |
| ३ बम्भारिः (धि.) | ४ वायुमूर्तिः (शिवः) | ४ चक्षुः | जिह्वा | बहुरूपः | वैद्युतः |
| ४ कविः (धि.) | ५ आकाशमूर्तिः (शिवः) | ५ प्राणः | घ्राणम् | त्र्यम्बकः | रजतः |
| ५ विश्ववेदाः (धि.) | १ सूर्यमूर्तिः (शिवः | ६ प्राणः | वाक् | भूतेशः | परुषः |
| ६ हव्यवाहनः (धि.) | २ चन्द्रमूर्तिः (शिवः) | ७ वाक् | पाणिः | जयन्तः | श्यामः |
| ७ प्रचेताः (धि.) | ३ विद्युन्मूर्तिः (शिवः) | १ उपस्थम् | पादः | पिनाकी | कपिलः |
| ८ मार्जालीयः (धि) | १ पवमानः (घोरा) | २ पायुः | उपस्थम् | अपराजितः | अतिलोहितः |
| १ अजएकपात् (नू.गा) | २ पावकः (घो.) | ३ नाभिः | पायुः | अजएकपात् | ऊर्ध्वः |
| २ अहिर्बुध्न्यः (पु गा | ३ शुचिः (घो.) | १ आत्मा | आत्मा | अहिर्बुध्न्यः | अवपतनः |
| इत्यधियज्ञमुखाः १ ॥ ११ ॥ | इत्यधिभूतमुखाः २ ॥ ११ ॥ | इत्याध्यात्ममुखाः ३ | इति वाध्यात्ममुखाः ३ | इत्यधिदैवमुखाः ४ | इत्यध्यन्तरिक्ष मुखाः ५ |

आ-आहवनीयाग्नि। धि=धिष्ण्याग्नि। नू. गा =नूतनगार्हपत्याग्नि। पु. गा =पुराणगार्हपत्याग्नि।

परिलेख में अधियज्ञ, अधिभूत, अध्यात्म, अधिदैव तथा अन्तरिक्ष आधारक सब भावों का स्पष्टीकरण करते हुए प्रत्येक भाव के नाम जो वैदिक परिभाषा के अनुगत हैं तथा प्रत्येक इन्द्रियों से उनका सम्बन्ध जो अध्यात्म संस्था में हो रहा है उसका भी स्पष्टीकरण किया गया, इसी तरह देवता रूपों के स्पष्टीकरण के साथ-साथ उनके नाम भी गिना दिये गये। अन्तरिक्ष में विद्युत आदि रुद्र भावों का स्पष्टीकरण भी किया गया है।

## आदित्यभेदाः ।

अथादित्यभेदा द्वादशादित्याः—

'इन्द्रो धाता भगः पूषा मित्रोऽथ वरुणोऽर्यमा ।
अंशुर्विवस्वांस्त्वष्टा च सविता विष्णुरेव च ।।'

(इति पौराणिकाः)

"द्वादश वै मासाः संवत्सरस्य । एत आदित्याः । एते हीदं सर्वमाददाना यन्ति तस्मादादित्याः ।" इति श्रुतिः (बृ. उ. । ३ अ. । ९ ब्रा. । ५ कं.)

**"अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम् ।।" (ऋग्वेद १/८९/१०)**

इत्यदितिः श्रूयते । अदितिपरिगृहीता द्वादशविधाः प्राणा आदित्याः ।।

## आदित्य के भेद ।

आदित्य के १२ भेद हैं—पुराणों के अनुसार बारह आदित्यों के नाम
इन्द्र, धाता, भग, पूषा, मित्र, वरुण, अर्यमा, अंशु, विवस्वान्, त्वष्टा, सविता और विष्णु हैं ।

(बृ. उ ३. अ. ९ ब्रा ५ कं.) के वेद वचनानुसार सम्वत्सर के १२ मास ही आदित्य हैं, वहां आदित्य शब्द की व्युत्पत्ति करते हुए बताया गया कि जगत् में ये सबको देते और लेते हुए जाते हैं (आददाना यन्ति) इसलिए आदित्य कहे जाते हैं ।

मूल मंत्र में अदिति शब्द की व्याप्ति बतायी जा रही है—
अदिति द्युलोक है, अदिति अन्तरिक्ष है माता, पिता, पुत्र भाव भी अदिति के ही हैं, विश्वेदेव अदिति रूप हैं, पंचजन नाम से कहे जाने वाले प्रकृति के रूप प्राण, आप, वाक्, अन्न और अन्नादि भी अदिति रूप हैं जो कुछ पैदा हो चुका है या जो उत्पन्न होने वाला है वह सब अदिति का रूप है—

इस प्रकार वेद में अदिति का वर्णन हुआ है । अतः अदिति के द्वारा परिगृहीत बारह प्रकार के ये प्राण रूप देव आदित्य कहे जाते हैं ।

## विवस्वदादित्यप्रजनितेषु मनुयममृत्युषु मनुनिरुक्तिः ।

एष्वादित्येषु योऽयं विवस्वान्नामैकः तद्विकारादुत्पद्यमानास्त्रिविधाः प्राणाः प्रजायन्ते—मनुः यमः मृत्युश्चेति । आयुष्कृत आत्मारम्भका दशप्राणा विराजो नाम यतः प्रवर्तन्ते स हृद्ग्रन्थिरूपेण हृदये प्राणापानव्यापारोपाश्रयभूतव्यानवायु-संयमनः प्राणविशेषो मनुः । मनुप्राणेन हृदि ग्रन्थितो व्यानवायुरुपांशुसवनो भूत्वा उपांश्वन्तर्यामग्रहाभ्यां प्राणापानौ गृह्णन् वैश्वानरमग्निं जनयति तेनात्मनैषः पुरुषो जीवति । परपुरुषमनोग्राहित्वाच्चैष मनुर्नाम । उक्तं च—

"प्रशासितारं सर्वेषामणीयांसमणोरपि ।
रुक्माभं स्वप्नधीगम्यं तं विद्यात्पुरुषं परम् ॥१॥
एतमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।"
इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥२॥ इति । (मनुस्मृति १२-१२२,१२३)

भृग्वङ्गिरसौ, अत्रिमरीची, पुलस्त्यपुलहौ, क्रतुदक्षौ, वसिष्ठविश्वामित्रौ—इत्येवं भृग्वादिदशविधप्राणजनकोऽयं मनुर्हैरण्यगर्भो द्रष्टव्यः । हिरण्यगर्भप्राणस्य ज्योतिर्गौरायुरित्येवं त्रैविध्यादायुःकोशस्यैव चाध्यात्मिकस्य मनुशब्देनाभिनयात् ॥

अण्डजाः पिण्डजाः, ऊष्मजाः, उद्भिज्जाः—इत्येवं चतुर्विधा मनवः । चत्वारो मनवस्तथा—इति गीतास्मरणात् । चतुर्णामप्येषामविशेषेण मनुजत्वेऽपि पिण्डजविशेषेष्वेवायं मनुष्यशब्दव्यपदेशो मनोरत्र वैशेष्यप्रतिपत्त्यर्थः । मनसि हि तत्र धियः समवायो वैशेष्यम् । अत एव च—

"पुनन्तु मां देवजनाः पुनन्तु मनसा धियः
पुनन्तु विश्वा भूतानि जातवेदाः पुनातु माम्" ॥ १ ॥ (ऋग्वेद ६/६७/२७)

इति मन्त्रे "पुनन्तु मनवो धिया" इति आथर्वणिकशाखान्तरपाठः समानार्थो भवति ।

## विवस्वान् नामक आदित्य से उत्पन्न मनु, यम तथा मृत्युमय मनु का निर्वचन ।

इन आदित्यों में जो विवस्वान् नाम की एक आदित्य संस्था है उसके विकार से उत्पन्न होने वाले तीन प्रकार के प्राण होते हैं—मनु, यम और मृत्यु । इनमें मनु वह है जो आयु को आरम्भ करने वाले दश प्रकार के विराज नाम के प्राण जिसके आधार पर प्रवृत्त

अग्निस्तु उदगयनवेलायामुत्पन्नो वसन्तग्रीष्मवर्षासु क्रमेण परिवर्द्धते। तत्र तावदस्यावयवाः सर्वेषु वाय्वादिष्वर्थेषु वसन्तो भवन्तीत्येतत्क्रियोपलक्षितः स कालो वसन्तः। तावत्कालिकोऽयमग्निरपि वसन्तः। अथ क्रमेण प्राबल्यं गच्छन् सर्वमाक्रम्य गृह्णातीत्येतत्क्रियोपलक्षितः कालो ग्रीष्मोऽग्निरपि ग्रीष्मः। नितरां दहतीति निदाघः। दाहकर्म्मणैवोष्मा च। ततोऽप्यतितरां वर्षिष्ठो भूत्वा तोयात्मना परिणतः प्रवर्षति वर्षति वेत्येतत्कर्म्मणा प्रावृड् वा वर्षा वा। एतावान् वृद्धिकालः। अथ क्रमेणैव ह्रासकालः। तत्र तावदयमग्निर्यावता कालेन शीर्य्यमाणावयव इव भवति स कालोऽग्निश्च शरत्। ततो हीनतां गतोऽग्निस्तत्कालश्च हेमन्तः। अथ पूर्णतया शीर्णरूपोऽग्निस्तत्कालश्च शिशिरः इति। स यथा चन्द्रो दर्शान्तादूर्ध्वं समुत्पद्य दर्शान्ते म्रियते, एवमयमृताग्निरुदगयनादौ समुत्पद्य दक्षिणायनान्ते म्रियते।

जितना भी उष्णभाव है वह अग्नि का स्वरूप है। जितना भी शीत भाव है वह सोम है। एवं जो न शीतल है और न घर्म है—वह यम का रूप है। इनमें यह अग्नि दक्षिण दिशा से चलकर उत्तर दिशा की ओर अनवरत अनुधावन करता रहता है। ऊपर की ओर गतिमान् रहने का अग्नि का सहज स्वभाव है। विश्व में सबसे उच्च मानी जाने वाली दिशा को ही उत्तर दिशा कहा जाता है। इसी प्रकार सोम उत्तर दिशा से चलकर दक्षिण दिशा की ओर सतत अनुधावन करता रहता है। सोम की अग्नि से सर्वथा विपरीत नीचे की ओर गति रहती है, निम्न गति सोम का स्वभाव है। विश्व में नीची दिशा के रूप में दक्षिण का ग्रहण किया जाता है। इन अग्नि और सोम के मध्य में इन दोनों का नियमन करने वाला विवस्वान् से समुत्पन्न यम नाम का प्राण प्रवृत्त रहता है। इसी विषय का महर्षि का वेद वचन है—

> "मृत्यु के भीतर अमृत रहता है, मृत्यु भाव में अमृत का आधान किया गया है। मृत्यु का वास विवस्वान् (यम) है। मृत्यु की उत्पत्ति का कारणभूत आत्मा विवस्वान् में संस्थित है।"

सृष्टिभाव के प्राकृतिक नियमानुसार अग्नि में धारारूप से निरन्तर हवन किया जानेवाला सोम ही विश्व को उत्पन्न करता है। उस अग्नि-सोम संमिलन के मध्य में रहनेवाला यम नामक प्राण जब अग्नि में होनेवाली उस सोम की आहुति को रोक देता है–उसी समय संत्रस्त होकर जीवात्मा शरीर को छोड़ता हुआ मर जाता है—अतः उसे मृत्यु कहा जाता है। क्योंकि अग्नि-यम-सोम इन तीनों के प्रभाव से ही विश्व प्रवृत्ति वा उत्पत्ति होती है अतः ये विश्व के तीनों पितर माने गए हैं। वर्षा ऋतु के चातुर्मास्यरूप पर्व काल में होनेवाली पितरों से सम्बन्ध रखनेवाली इष्टि नाम से कही जाने वाली तत्कालीन यज्ञ प्रक्रिया की उन इष्टियों में इनका यजन-पूजन होता है। उस यज्ञ में सोम के लिये उत्तर भाग में आहुति दी जाती है, अग्नि के लिये दक्षिण में, तथा इनके ही

अन्तराल में यम को आहुति दी जाती है। यही कारण है कि इन तीनों पितृप्राणों की सर्वत्र समान भाव में प्रवृत्ति रहने पर भी इनकी ये दिशायें ही नियत हैं। सोम प्रधान सोमसद् पितरों की दिशा उत्तर की ओर, बर्हिषदों की स्थिति मध्य में, अग्निष्वात्तों की दक्षिण की ओर।

उक्त विषय की अन्य प्रकार से व्याख्या की जाती है।

अत्रि, अङ्गिरा, भृगु इन ऋषि प्राणों से जिनका स्वरूप बना है वे सोम-यम-अग्नि ये तीनों परस्पर एक दूसरे से संसक्त (जुड़े हुए) रहकर पितर कहे जाते हैं। ये सब परस्पर संसक्त रहते हुए ही संवत्सर काल में भोग योग्य होते हैं—अतः संवत्सर नाम से इनका व्यवहार होता है। उस संवत्सर के दो शरीर-ऋत और सत्य हैं। जितना अग्नि का भाग है—वह ऋत है और जितना सोम का भाग है-वह सत्य है। इस संवत्सररूप प्रजापति का जो सत्यभाव का शरीर बना था—उससे पितरों की सृष्टि करने के अनन्तर प्रजापति ने उस सत्यरूप सोम शरीर का भी त्याग कर दिया। विष्णु पुराण में इसका उल्लेख है—

"सोम अग्नि से संसक्त होकर अपने प्राकृत स्वरूप को छोड़ देता है अर्थात् अग्नि-रूप ही हो जाता है"—यही पुराणोक्ति का तात्पर्य है। अग्नि तो उत्तरायण काल में उत्पन्न होकर वसन्त, ग्रीष्म तथा वर्षा काल में क्रमशः सब ओर परिवर्धित होता है। उस समय अग्नि के अवयव वायु आदि सब पदार्थों में वास कर लेते हैं—अतः अग्नि की सर्वत्र वास-रूपा इस क्रिया से परिलक्षित वह काल वसन्त नाम से कहा जाता है। उतने काल तक यह अग्नि भी वसन्त नाम से ही जाना जाता है। आगे क्रमशः प्रबलता पाता हुआ वह अग्नि सब पर आक्रान्त होकर सबको अपनी पकड़ में ले लेता है, इस सर्वग्राही क्रिया से परिसंकेतित काल ग्रीष्म तथा अग्नि भी ग्रीष्म कहलाता है। ये अग्नि जब अत्यन्त उग्ररूप से दहन करने लगता है तब इसे निदाघ कहा जाता है। दाहन कर्म से ही ऊष्मा (घर्म) होती है। इससे भी आगे जब अग्नि अति मात्रा में बढ़ जाता है तब जल रूप में परिणत होकर खूब बरसता है—इस वर्षण क्रिया से परिलक्षित वह काल प्रावृट् अथवा वर्षा काल कहा जाता है। इतना अग्नि का वृद्धिकाल होता है। तदनन्तर क्रमशः ही उसका ह्रास काल आरंभ होता है। उस परिस्थिति में जितने काल तक इस अग्नि के तेज रूप अवयव क्षरित से होने लगते हैं—वह काल और तात्कालिक वह अग्नि शरत् नाम से व्यवहृत होता है। उस अवस्था से आगे अधिक तेजहीनता हो जाने से वह अग्नि और वह काल हेमन्त होता है। इससे भी आगे के काल में जब अग्नि का तेज पूरी तरह शीर्ण हो जाता है तब शीर्णभाव का वह अग्नि और तत्संबन्धी काल शिशिर ऋतु के नाम से जाना जाता है। दृष्टान्त रूप में जैसे चन्द्रमा अमावस्या के अनन्तर नवीन कलावान् होकर उत्पन्न होता है और दूसरी अमावस्या आने पर कलाक्षीण होकर मर जाता है, इसी प्रकार यह ऋतु अग्नि उत्तरायण काल में उत्पन्न होकर दक्षिणायन के अन्त में निस्तेज होकर मर जाता है।

स एतावानमुष्य ऋतारग्नेरेको भोगकालः संवत्सरः। तस्यैते बुद्धिह्रासोपलक्षिताः षडवयवा ऋतवो नाम। अग्नयोऽप्येते ऋतवः। ते पितरः। ऋतुभिरेवैषामर्थंजातानामुत्पत्तोर्दृश्यमानत्वात्। स च ऋतुस्त्रेधा विकल्प्यते। अस्ति स दिवसः, अस्ति स मासः, अस्ति स संवत्सरः। त एते त्रयोऽपीत्थं पिता, पितामहः, प्रपितामह इव पितरः संभवन्ति।

क्वचित्तु पञ्चैव ऋतवः श्रूयन्ते—हेमन्तशिशिरयोः समासेन। तत्रायमेकैको द्वासप्ततिदिवसः स्यात्। अपिच मनुष्याणां पशूनां पक्षिणां सरीसृपाणां स्थावराणां चेति पंचानां ये पुष्यकालास्ते पञ्चर्तवो द्रष्टव्या इत्याहुः। एते च सर्वोत्पादकत्वात् पितरः स्युः।

एषु सर्वत्र स्थानिनां स्थानाख्यया विवक्षणात् स्थानिपरा एते संवत्सरादयः शब्दा आख्याताः। स्थानी चाग्निरिहाख्यातः। तत्र मतभेदान् प्रदर्शयामः।

"अग्नि" रिति वायुपुराणम्।

"तमोभूते जगत्त्रये सर्वतः पूर्वमम्भांसि जज्ञिरे ते ब्रह्मणः पुत्रा उत्तरेषाममीषां सर्वेषां पितरः"—

(इत्यादित्यपुराणम्)

"वराहरूपेण विष्णुना—समुद्रादुद्धृतायाः पृथिव्या दंष्ट्राविलग्ना मृत्पिण्डाः पितरः"—

(इति महाभारतम्)

"ब्रह्मणः प्रजापतेर्देहात् तन्मात्रा उदपद्यन्त ता ऊर्ध्वं जिगमिषन्त्यो वियत्संस्थास्तपस्विन्यः पितर उच्यन्ते।"

(इति वराहपुराणम्)

तेषामेषां सर्वेषामग्निसोमयमेष्वेव तात्पर्यं पर्यवस्यति। अग्न्यादयस्तु तारतम्यवन्तः परस्परसंसृष्टा ऋतवः। त एवेह पितर इति ससिद्धम्। अत एव हि अग्निष्वात्ताः सोमवन्तो बर्हिषदश्चेति त्रयः पितरः। अत एव हि क्रमेण भृगवोऽत्रयोऽङ्गिरसश्चेति त्रयः पितर इत्यपि सिद्धम्।

तदित्थमेते सोमसदादयस्त्रयोऽप्यमूर्ता धर्म्ममूर्तयो नान्दीमुखाः पितरः समाख्याताः। कोष्ठकेनैषां परिलेखो यथा—

| दिशः | देवाः | ऋषयः | पितरः | लोकाः | जनकाः | जन्याः | संख्यातः |
|---|---|---|---|---|---|---|---|
| उत्तरा | सोमः | पितृमान् | सोमसदः | सनातनाः | साध्यानां | वैराजाः | .......... |
| अंतरा | यमः | अङ्गिरस्वान् | बर्हिषदः | सोमपथाः | देवयोनीनां | मारीचाः | ८६००० |
| दक्षिणा | अग्निः | कव्यवाहनः | अग्निष्वात्ताः | वैभ्राजाः | देवानां | पौलस्त्याः | ६४००० |

वह उस ऋतागिन का इतना भोग काल संवत्सर है। उस अग्नि के वृद्धि और ह्रास भाव से परिलक्षित वे ६ अवयव वा अंश ऋतु कहे जाते हैं। इससे यह स्पष्ट होता है कि ये अग्नि भी ऋतु रूप हैं। ये पितर हैं। ऋतुओं के द्वारा ही संसार में सब पदार्थों की उत्पत्ति देखी जाती है। वह ऋतुभाव तीन रूपों में कलपित होता है—जैसे ऋतुसम्बन्धी अमुक दिवस है, अथवा मास है अथवा सम्वत्सर है। ये दिवस, मास, संवत्सर प्रकार भेद से पिता, पितामह, प्रपितामह की तरह पितर रूप में संभावित होते हैं।

श्रुति में कहीं तो पांच ही ऋतु माने जाते हैं—उस मान्यता में एक-एक ऋतु ७२ दिन का मानना होगा। पांच ऋतु मानने वालों का यह भी कथन है कि मनुष्य, पशु, पक्षी सरीसृप (रेंगने वाले जीव) तथा वृक्ष आदि स्थावर-इन पांचों के जो पोषण काल होते हैं उनको ही पांच ऋतु रूप जानना चाहिये। एवं च सबके उत्पादक होने के कारण ये पितर माने जाने चाहिये।

इनमें सर्वत्र स्थानाभिमानी स्थानियों की स्थान रूप से कथन की प्रक्रिया रही है, वास्तव में ये संवत्सर आदि शब्द स्थानी भाव के ही निर्देशक कहे गए हैं। स्थानी यहां अग्नि ही कहा गया है। इस विषय के मतभेद दिखाये जाते हैं।

"वायु पुराण अग्नि का ही पितृभाव मानता है।" आदित्य पुराण में कहा गया कि "भू:, भुव:, स्व:, ये तीनों जगत् प्रलय अवस्था में जब तम भाव से ग्रसित तमोमय हो गया तब सबसे प्रथम अम्भस् रूप अप भाव की उत्पत्ति हुई, ये अम्भस् ब्रह्मा के पुत्र थे-इनसे आगे की सारी सृष्टि के ये पितर हैं"। महाभारत का लेख है कि "वराह रूप से विष्णु के द्वारा समुद्र से समुद्धृत पृथ्वी के वराह की दाढ में लगे हुए मृत्तिका के पिण्ड भाग पितर हैं।" वराहपुराण के अनुसार "प्रजापति ब्रह्मा के देह से तन्मात्रा उत्पन्न हुई-(पंचभूतों की आन्तरिक शक्ति तन्मात्रा कही जाती है) वे तन्मात्रा ऊपर जाने की इच्छा से आकाश में स्थिति पाकर तपस्या में रत हो गई-वे तपस्विनी तन्मात्रा ही पितर कही जाती हैं"।

इन सब पौराणिक कथनों का अग्नि-सोम-यम में ही तात्पर्य समुचित होता है। अग्नि आदि तो तारतम्य भाव से परस्पर जुड़े हुए ऋतु रूप होते हैं। वे ही सम्यक् रूप यहाँ पितर सिद्ध होते हैं। अतएव निश्चयपूर्वक अग्निष्वात्त, सोमवन्त और बर्हिषद ये तीन पितर हैं। एवं च इस कारण ही भृगु, अत्रि और अङ्गिरा ये तीन भी पितर हैं, यह सिद्ध हो जाता है। इस प्रकार ये सोमसद आदि तीनों अमूर्त (निराकार) केवल धर्म मूर्तिभाव के नान्दीमुख नाम के पितर व्याख्यात हुए हैं।

कोष्ठ के रूप में इनका परिलेख (नक्शा) दिया जाता है—परिलेख में इनकी दिशा, देवभाव, ऋषिभाव, पितर, लोक, पितरों के उत्पादक जनक तथा पितर जिनको उत्पन्न करते हैं वे देवगण एवं च उनकी संख्या स्पष्ट की गई है।

## पार्वणाः प्रेतपितरः।

अथ पार्वणाः पितरः प्रदर्श्यन्ते–ते च नान्दीमुखेभ्यः पितृभ्योऽधस्तादनुवर्तन्ते—तिर्य्यक् संस्था अधोमुखा मूर्तिमन्तश्च। त इमे चतुर्विधाः—सोमपाः, हविर्भुजः, आज्यपाः, सुकालिनश्च। सोमपाः सोमवन्तः सौम्याः काव्याः कव्यादा इत्येकार्थाः। द्विविधा हि सोमपा भवन्ति—वैराजाः काव्याश्च। तत्र वैराजसोमपा अमूर्ता नान्दीमुखेषूक्ताः। ये त्ववराः—काव्याः सोमपास्त इह पार्वणा उच्यन्ते। एते हि कवेरुत्पद्यन्ते। तस्मात् काव्या इत्याहुः। यत्रैते प्राधान्येन तिष्ठन्ति ते ज्योतिर्भासा नाम लोकाः। अथवा यत्र यावन्तस्ते भवन्ति तावन्तस्ते सर्वे ज्योतिर्भासा नाम लोकाः। लोकत्वे तेषामेव ज्योतिर्भाससंज्ञा। न च तदभावादतिरिच्यते तल्लोकः। सालोक्यसामीप्यादिना तद्भावापत्तिरेव तल्लोकावाप्तिः। एवमुत्तरेष्वपि द्रष्टव्यम्।

अथ हविर्भुजः, हविष्मन्तः इत्यनर्थान्तरम्। एत एवोपहूताः पितर इति केचिदाहुः अङ्गिरसो ह्येते जायन्ते तस्मादङ्गिरसो नाम। एषां मारीचा नाम लोकाः। मरीचिगर्भा वा।

अथाज्यपाः, त एव सुस्वधा इत्याहुः। एते पुलस्त्यादुत्पद्यन्ते तस्मात् पौलस्त्याः। मतान्तरे तु पुलहपुत्रात् कर्दमादुत्पद्यन्ते। तस्मात् कार्दमास्ते भवन्ति। एषां तेजस्विनो नाम लोकाः।

अथ सुकालिनः सुकाला अप्युच्यन्ते ते वसिष्ठोत्पन्नत्वाद्वासिष्ठाः। तेषां मानसा लोकाः। सर्वेषां पितरोऽप्येते चत्वारो ब्राह्मणादीनां चतुर्णां विशिष्य पितरो भवन्ति।

"सोमपा ब्राह्मणानाम्, हविर्भुजः क्षत्रियाणाम्, आज्यपा वैश्यानाम्, सुकालिनः शूद्राणाम्"।

तत्रैते ब्राह्मणादयः शब्दा न मनुष्यविशेषमात्रपराः, अपितु यावदिदं किञ्चिद्दृश्यते स्थावरं च जङ्गमं च, प्राणि चाप्राणि च, तत्सर्वं चातुर्वर्ण्यमिहेष्यते। सर्वत्रैवामुष्मिन् भूतभौतिकप्रपञ्चे आग्नेयं सर्वं ब्राह्मणम्। ऐन्द्रं सर्वं क्षत्रियम्। वैश्वदेव्यं सर्वं वैश्यम्। पौष्णं तु सर्वं शूद्रमित्येषा परिभाषा वेदितव्या। सर्वेषामेषामर्थजातानामग्नीन्द्रमरुत्पूषसंयोगेन विभज्य विभिन्नप्रकृतिकतयोत्पन्नत्वात्। यथा दिव्ये पशुचतुष्टये अजो ब्राह्मणः, मेषः क्षत्रियः, गौर्वैश्यः, अविस्तु शूद्र इति

**श्रूयते। एकस्मिन्नेव च प्राणिशरीरे मुखभागो ब्राह्मण:, उरोभाग: क्षत्रिय:, मध्यभागो वैश्य:, पदभागस्तु शूद्र:। इत्येवमन्यत्रान्यत्रापि द्रष्टव्यम्। अत एवैषां सर्वत्र साङ्कर्यात् सर्व एवैते विवक्षानुरोधेन सर्वेषां पितर: सम्भवन्ति। वस्त्वसाङ्कर्य्ये व्यवहारसाङ्कर्यस्य दोषानाधायकतया सम्प्रतिपन्नत्वात्।**

## पर्वकाल सम्बन्धी-पार्वण पितर।

(श्राद्ध विधि में एकोद्दिष्ट तथा पार्वण श्राद्ध प्रसिद्ध है। सपिण्डीकरण के अनन्तर पार्वण होता है।)

यहां से पार्वण पितरों की व्याख्या प्रारम्भ की जाती है—वे पार्वण पितर नान्दीमुख नाम के पितरों से अधोभाग में रहते हुए उनका अनुसरण करते हैं। ये तिरछी संस्था में रहने वाले नीचे मुख के मूर्तिमान् पितर हैं। ये सोमपान करनेवाले, हविष्यान्न भोक्ता, घृतपान करनेवाले तथा सुकाली वर्ग के चार प्रकार के पितर हैं। सोमपायी-सोमवान्-सौम्य-काव्य तथा कव्याद ये सब समान अर्थ के परस्पर पर्यायवाची होते हैं। सोमपान करने वाले वैराज और काव्य नाम से दो प्रकार के हैं उनमें विराट् से उत्पन्न वैराज नाम के सोमपान करने वाले अमूर्त पितृगण नान्दीमुख पितृवर्ग में परिगणित माने गए हैं। जो दूसरे काव्य नाम के सोमपायी हैं वे यहां पार्वण पितर कहे जाते हैं। ये कवि (भृगुप्राण कवि नाम से प्रसिद्ध है) से उत्पन्न होते हैं इस हेतु आचार्यों ने इनको काव्य कहा है। जिस स्थान में ये मुख्यभाव से रहते हैं वे ज्योतिर्भास नाम के (ज्योति रूप से भासमान) लोक हैं। लोकभाव में उन पितरों की ही ज्योतिर्भास संज्ञा होती है। अथवा ये भी कहा जा सकता है कि जिस स्थान में वे जितने पितर होते हैं—वे सब स्थान ज्योतिर्भास नाम के लोक कहे जाते हैं। लोक रूप में ही वह पितृ संस्था होती है अत: उन ज्योति रूप में भासमान पितरों की ही ज्योतिर्भास लोक नामक संज्ञा होती है। उनके अतिरिक्त ज्योतिर्भास लोक का अन्य कोई अस्तित्व नहीं होता। सालोक्य, सामीप्य, सारूप्य तथा सायुज्य भावों में किसी भी रूप में ज्योतिभाव में परिवर्तित हो जाने को ही उस लोक की प्राप्ति कहा जाता है। आगे के पितृ विवेचन में भी ये ही प्रक्रिया ध्यान में रखनी चाहिये। तदनन्तर हविर्भुज और हविष्मन्त नाम के पितर भी एकार्थक ही हैं। अतएव कुछ विद्वानों ने इनको उपहूत (मन्त्रों द्वारा निमन्त्रण से बुलाये जाने वाले) पितर कहा है—ये हविर्भुज अङ्गिरा से उत्पन्न होने के कारण आङ्गिरस नाम से ख्यात हैं। मारीच नाम के इनके लोक हैं। अथवा ये भी कहा जा सकता है कि ये मरीचि के (रश्मि भाग के) गर्भ में रहते हैं।

आगे आज्यप (घृत पान करने वाले) पितरों को ही सुस्वधा नाम से भी विद्वानों ने कहा है। ये पुलस्त्य से उत्पन्न होने से पौलस्त्य कहे जाते हैं। इनके विषय में भिन्न मत यह भी है कि ये पुलह ऋषि के पुत्र कर्दम से उत्पन्न होते हैं—अत: वे तो कार्दम माने जाते हैं। तेजस्वी नाम के इनके लोक हैं।

सुकाली नाम से कहे गए पितरों को सुकाल नाम से भी कहा जाता है। ये वसिष्ठ से उत्पन्न होने से वासिष्ठ कहे जाते हैं। इनके मानस नाम के लोक हैं। सोमपायी सुकाली पर्यन्त पितरों के ये चारों वर्ग यद्यपि जगत में सबके पितर हैं, तथापि ब्राह्मण आदि चारों वर्णों के ये विशेष रूपेण पितर माने गए हैं।

इनमें-"सोमपान करने वाले सोमप पितर ब्राह्मणों के, हविर्भुज क्षत्रियों के, आज्य (घृत) पान करने वाले वैश्यों के, तथा सुकाली शूद्रों के पितर होते हैं।"

ये ब्राह्मण आदि शब्द यहां केवल मनुष्य विशेषों के लिये ही नहीं कहे गए हैं, अपितु स्थावर, जङ्गम नाम से ये जितना संसार दिखाई देता है—उसमें प्राणी और निष्प्राणी जो कुछ भी है वह सब इन चारों वर्ण भागों में से किसी एक से समन्वित रहता है, वैदिक विज्ञान की यही मान्यता है। इस संपूर्ण पंचभूत वर्ग में तथा इन भूतों के समन्वय से बने हुए भौतिक संसार में जितना भी अग्निप्रधान पदार्थ है वह सब ब्राह्मण वर्ग में माना जाता है। इन्द्र प्राण की प्रधानतावाला क्षत्रिय वर्ग का, विश्वे देव प्राण की प्रधानतावाला वैश्य वर्ग का, तथा पूषा प्राण की प्रधानतावाला शूद्र वर्ग का माना जाता है, ये वेद की परिभाषा ध्यान में रखनी चाहिये।

जगत् के दृश्यमान ये सारे पदार्थसमूह अग्नि-इन्द्र-मरुत्-पूषा प्राणों के संयोग से पृथक् भाव में विभक्त होकर भिन्न-भिन्न प्रकृति के उत्पन्न होते हैं। जैसा कि भोग योनि रूप देवसम्बन्धी चार पशु विशेषों में अज (बकरा) ब्राह्मण वर्ण का, मेष (मेंढा) क्षत्रिय वर्ण का, गौ वैश्य वर्ण तथा अवि (भेड़) शूद्र वर्ण के श्रुति में माने गए हैं। प्राणी के एक शरीर में भी इन चारों वर्णों की स्थिति रहती है—मुख भाग ब्राह्मण, उरः स्थल क्षत्रिय, मध्यम भाग, उदर वैश्य तथा चरण भाग शूद्र। इस प्रक्रिया से ही अन्यत्र सर्वत्र भी देखना चाहिये। निष्कर्ष यह है कि उपरोक्त चारों पितरों का सर्वत्र परस्पर संकर भाव रहने के हेतु ये सब ही वक्ता की कथनेच्छानुसार सब के पितर संभावित होते हैं। शास्त्र में वास्तविकतत्व के परिवर्तन के बिना यदि व्यवहारिक साङ्कर्य माना जाय तो कोई दोष नहीं माना जाता है।

**सोमग्राहिणः सोमपाः हविर्ग्राहिणो हविर्भुजः, आज्यग्राहिण आज्यपाः।**

**आज्यसोमयोर्द्रवद्रव्यतया तद्ग्रहणे पानव्यवहारः। हविषस्तु घनद्रव्यतया तद्ग्रहणे भोजनव्यवहारः। यानि द्रवद्रव्याण्यग्निसंयोगाद्दह्यन्ते, अर्चिर्भविन वा प्रज्वलन्ति तानि घृततैलमदिरादीनि आज्यानि। यानि तु द्रवद्रव्याणि न तथा दह्यन्ते न प्रज्वलन्ति तानि पयः प्रभृतीनि सोमशब्दानि। सोमस्याग्निरूपत्वात् तथा च—**

**'ये पितरः सोमद्रव्यमात्मसात् कृत्वाऽप्याय्यमाना भवन्ति ते सोमपाः।'**
**'आज्यद्रव्येणाप्याय्यमाना हविर्भुजः।'**

'ये तु न गृह्णन्ति कृतसम्बन्धा अप्यगृहीत्वैव निवर्तन्ते ते सुकालिनः'—इति भेदाः।

त्रयोऽप्येते पार्वणाः। पृथिव्यामन्तरिक्षे दिवि च सीदन्ति तेनैतेषां सहचारिणस्त्रयो देवा भवन्ति। वसवो रुद्रा आदित्याश्च। तेषु वसवः पृथ्वीसदः, रुद्रा अन्तरिक्षसदः, आदित्या दिविषदः—पितॄन् संतर्पयन्ति। सालोक्यात् पितृसहचराश्च ते पितरः समाख्यायन्ते। **'वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः।'** इति याज्ञवल्क्य स्मरणात्।

अथ ये तृतीयाः पितरस्ते प्रेता मनुष्यपितरः—ते वायुपुराणे स्मर्य्यन्ते

**ब्रह्मचर्य्येण तपसा यज्ञेन प्रजया तथा।**
**श्रद्धया प्रज्ञया चैव प्रदानेन च सप्तधा॥**
**कर्मस्वेतेषु ये युक्ता भवन्त्यादेहपातनात्।**
**देवैस्तैः पितृभिः सार्द्धं मोदन्ते सोमपाज्यपैः॥ इति॥**

ब्रह्मपुराणे च—

**पिता पितामहश्चैव तथैव प्रपितामहः।**
**त्रयोऽप्यश्रुमुखा ह्येते पितरः परिकीर्तिताः॥**
**तेभ्यः पूर्वतरा ये च प्रजावन्तः सुखोचिताः।**
**ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते॥ इति॥**

**"ये स्युःपितामहदूर्ध्वं ते स्युर्नान्दीमुखा"** इति मार्कण्डेयपुराणे च॥

अश्रुमुखाश्च नान्दीमुखाश्च सप्तैते प्रेतपितरः सौम्याः। एते हि सोमगता भवन्ति। **"ये वैके चास्माल्लोकत् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति"** इति कौषीतकश्रुतेः। एते सद्गतिमन्तः। अथ ये दुर्गतिमन्तस्ते सोमात्पतिता यातनास्थानमागता यतस्ततो विद्रवन्ति। केषांचित्तु गतिर्नास्ति। ते स्थावरान्तरेषु पंचसु तिर्य्यग्योन्यादिषु नानाभावेषु सम्भवन्ति। इत्थमेषां त्रिविधा स्थितिः। एतच्च धर्म्मसमीक्षायां सापिण्ड्यप्रकरणे विस्तरेण प्रपञ्चियिष्यते। इह तु प्रेतानां पितॄणां श्रौते कर्मणि देवतात्वं नास्तीत्यतो विरम्यते।

सोम को ग्रहण करनेवाले पितर सोमपायी कहे जाते हैं, हविष्य अन्न को ग्रहण करनेवाले हविर्भुज तथा घृत पान करनेवाले आज्यप अर्थात् आज्य पायी कहे जाते हैं।

आज्य (घृत) और सोम दोनों द्रव अर्थात् तरल पदार्थ होते हैं— अतः इनके ग्रहण भाव में पान करने का व्यवहार होता है। हविष्यान्न (हवन करने योग्य अन्न जो

चावल-तिल आदि) क्योंकि घन अर्थात् कठोर होते हैं अतः उनके ग्रहण में भोजन शब्द का व्यवहार होता है ।

(सामान्यतया आज्य शब्द यद्यपि घृत के लिये प्रयोग में लाया जाता है किन्तु विज्ञान भाव में आज्य की व्यापकता यहां बताई जा रही है)—

जो तरल पदार्थ अग्नि का संयोग पाकर जलने लगते हैं अथवा तत्काल ज्वाला रूप मे आ जाते हैं—वे घृत, तैल, मदिरा आदि आज्य कहे जाते हैं। एवं वे तरल पदार्थ जो अग्नि संयोग से न तो जलते हैं न ही ज्वाला रूप में परिणत होते हैं—वे दुग्ध आदि सोम कहे जाते हैं। सोम तो स्वयं अग्नि रूप होता है। पितरों के तीन विभाग होते हैं—"जो पितर सोमरूप पदार्थ को आत्मसात् करके अर्थात् अन्न रूप से ग्रहण भावेन अपने स्व-स्वरूप में अन्तर्गत करके तृप्ति का लाभ करते हैं—वे सोमपायी हैं।"

(यद्यपि पार्वण प्रकरण के आरंभ में सोमपायी, हविर्भुज, आज्यप तथा सुकाली ये चार पार्वण पितर कहे गए थे तथापि यहां आज्यप और हविर्भुज, को एक रूप मानते हुए तीन विभाग किये गये हैं— हेतु यह प्रतीत होता है कि आज्य आदि भी हविष्यान्न से संवलित होकर ही ग्रहण किये जाते हैं।)

अतः कहा गया है कि "आज्य द्रव से तृप्त होने वाले पितर भी हविर्भुज ही हैं।"

"जो पितर सोम-आज्य-हविष्य आदि किसी पदार्थ को ग्रहण नहीं करते वे श्राद्ध कर्ता से सम्बन्ध तो किये रहते हैं किन्तु किसी भी पदार्थ का ग्रहण न करते हुए वे तो प्रणाम मात्र स्वीकार करके निज धाम को लौट जाते हैं—वे सुकाली पितर कहे जाते हैं।" ये ही तीन भेद हैं। ये तीनों पार्वण पितर हैं, अर्थात् पर्वकाल जो अमावास्या आदि सन्धिकाल हैं उस समय समाहूत होकर दिये गये हविष्य आदि को ग्रहण करते हैं। इन तीनों पितरों का पृथ्वी-अन्तरिक्ष तथा द्युलोक तक परस्पर संचरण रूप सम्बन्ध रहता है—अतः पृथ्वी आदि तीनों लोकों के पृथक्-पृथक् अधिष्ठाता तीन देव भी इनके सहचारी हो जाते हैं—वे हैं—वसु-रुद्र-आदित्य। उनमें अग्निमय वसुगण पृथ्वी से सम्बन्धित पितरों को, रुद्रगण (वायु रूप) अन्तरिक्षसम्बन्धी पितरों को और आदित्य गण द्युलोक (स्वर्ग) सम्बन्धी पितरों को तृप्त किया करते हैं। समान लोक में स्थिति के कारण तथा पितृवर्ग के सहचार के कारण वसु-रुद्र-आदित्य देवता होते हुए भी पितर कहे जाते हैं। जैसा कि याज्ञवल्क्य का स्मृति वचन है—"वसु-रुद्र तथा अदिति के पुत्र (आदित्य) ये पितर कहे जाते हैं—ये ही श्राद्ध के प्रधान देवता हैं।"

अब मनुष्य रूप पितर जो यहां से मरकर जाते हैं तथा मरणोत्तर दश दिन के श्राद्ध विधान में जिनका प्रेत शब्द से ही आह्वन किया जाता है तदनन्तर ऊर्ध्व दैहिक विधान के अनन्तर वे पितृ संज्ञा धारण करते है, उन प्रेत पितरों की विवेचना की जाती है ।

वायु पुराण का कथन है—

"अपने जीवन काल में जो मनुष्य समुचित ब्रह्मचर्य का पालन करते हैं, तपस्या करते हैं, यज्ञ करते हैं, संतान उत्पन्न कर के वंशवृक्ष को बढाते हैं, श्रद्धा युक्त श्रद्ध करते है, वेद स्वाध्याय से प्रजा का अर्जन करते हैं, यथा शक्ति दान करते हैं, देहपात पर्यन्त उक्त कर्मों में संयुक्त रहते हैं, वे मनुष्य देहपातानन्तर वसु-रुद्र-आदित्य इन देवताओं के साथ तथा इन के सहचारी सोमपायी और आज्यपायी पितरों के साथ संतुष्ट रहते हैं" ।

ब्रह्मपुराण का कथन है—

"पिता, पितामह तथा प्रपितामह ये तीनों अश्रुमुख पितर कहे गए हैं । इनसे भी पूर्वतर पितर वृद्ध प्रपितामह आदि जो पुत्र, पौत्र आदि से प्रजायुक्त रहते हुए पूर्ण आनन्द भाव में स्थिति पाते है—वे तो नान्दीमुख पितर कहे जाते हैं—अति समृद्धि भाव को नान्दी कहा जाता है ।"

मार्कण्डेय पुराण का वचन—

"जो पितर पितामह से ऊपर के हैं वे नान्दीमुख हैं ।"

भी इसका अनुमोदक है ।

(यहां के पितामह शब्द को प्रपितामह का उपलक्षण मानना चाहिये ।)

तीन विभाग नान्दीमुखों के और सोमप आदि चार विभाग अश्रुमुखों के–इस प्रकार ये सात प्रेत पितर सोम की प्रधानता से सौम्य कहे जाते हैं । ये चन्द्रलोक में चले जाते हैं—इस कारण भी सौम्य कहे जाते हैं । कौषीतक श्रुति वचन है "जो कोई भी इस लोक से मरणोत्तर प्रयाण करते हैं—वे सब चन्द्रमा में ही जाते हैं ।" चन्द्रलोक की ये गति सद्गति कही जाती है । जो पितर उचित और्ध्वदेहिक श्राद्ध न हो सकने के कारण अथवा अपने पापकर्मों के कारण दुर्गति ग्रस्त हो जाते हैं वे सोम अर्थात् चन्द्रलोक से गिर जाते हैं—तथा यातना स्थान रूप अन्तरिक्ष में आकर इधर-उधर भाग दौड़ करते रहते हैं । कुछ का तो सद्गति मार्ग ही रुद्ध हो जाता है । वे स्थावर वृक्ष आदि योनियों में अथवा तिर्यग् (रेंगनेवाले) जीवों की योनि में नाना रूपों में उत्पन्न होते हैं । इस प्रकार पितरों की त्रिविधा स्थिति होती है ।

यह विषय धर्म समीक्षान्तर्गत सापिण्ड्य प्रकरण में विस्तार से बताया जायगा। यहां तो प्रेतपितरों का श्रौत कर्म में देवता भाव नहीं रहता यह कहकर विराम किया जाता है।

तदित्थं श्रौतकर्मोपयुक्ताः प्राणविशेषाः सप्तैव पितरः सिद्धाः—अग्निष्वात्ताः, बर्हिषदः, सोमसदः, हविर्भुजः, सोमपाः, आज्यपाः, सुकालिनश्चेति। ऋषिभ्यश्चैते पितरः सप्तापि प्रजायन्ते। ते यथा—मरीचिः पुलस्त्यो वा, अत्रिर्मरीचिर्वा, विराट्, अङ्गिरा, भृगुः, पुलस्त्यः, वसिष्ठः। तेषां त्रयः प्रथमा अमूर्ताः, परे चत्वारो मूर्तिमन्त इत्युक्तम्। अग्निः यमः सोमः—इत्येते त्रयः—क्रमेण अग्निष्वात्तादीनामाज्यपान्तानां पितॄणां देवा इष्यन्ते। सुकालिनस्तु निर्देवाः। वसवो रुद्रा आदित्या—इत्येते त्रयो देवाः पितृसंतर्पणा भवन्ति। अथ भृगवः, अङ्गिरसः, अत्रयः—इत्येते त्रयः क्रमेण—अग्निष्वात्तादीनामाज्यपान्तानां पितॄणामृषयः सम्भवन्ति। ये तु अथर्वाणः श्रूयन्ते। ते भृग्वङ्गिरसोरविशेषत्वात् ततो नातिरिच्यन्ते तस्मात् त्रय एवर्षयः स्युः। सुकालिनां तु वसिष्ठा ऋषयः। एते चर्षयो मरीच्यादयो मनोर्विराजः प्रजायन्ते। स च मनुर्हिरण्यगर्भात्। तदुक्तं मानवीये—

मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः।
तेषामृषीणां सप्तानां पुत्राः पितृगणाः स्मृताः॥
ऋषिभ्यः पितरो जाता पितृभ्यो देवदानवाः।
देवेभ्यस्तु जगत्सर्वं चरं स्थाण्वनुपूर्वशः॥ इति॥ (मनुस्मृति ३-१९४,२०१)

तथा च अग्विष्वात्तादयः पितरः, मरीच्यादयः पितामहाः, मनुः प्रपितामहः। हिरण्यगर्भो वृद्ध इत्येवं सर्वेषामेषां पितृपरम्परा सिद्धा।

अथाहुः—त्रयो ह नु वै पितरः—अवमाः—ऊर्वाः—काव्या इति श्रुत्यन्तरप्रसिद्धानां पितृविशेषाणामनाख्यानान्न्यूनत्वमिति चेन्न।

उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः।
असुं य ईयुरवृका ऋतज्ञास्तेनोऽवन्तु पितरो हवेषु। (ऋग्वेद १०।१५।१)

इति मन्त्रप्रसिद्धानामवरपरमध्यमानां पितॄणामेव श्रुत्यन्तरेऽवमादिशब्दैरभिनयादनतिरेकात्। न हि तद्व्यतिरेके प्रमाणान्तरमुपलभामहे। इति दिक्।

अथ वायुपुराणवचनेष्वेके विप्रतिपद्यन्ते। इह तावदग्निष्वात्ताद्यास्त्रय एव दिव्यपितरः समाख्याताः। अग्न्यादिभिः षड् वा। पुराणे त्वष्टौ दिव्यपितरः स्मर्य्यन्ते।

**कव्यवालोऽनलः सोमो यमश्चैवार्य्यमा तथा ।**
**अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ।। इति ।।**

इस प्रकार कथित प्रेतपितरों के अतिरिक्त श्रौत कर्म के उपयोगी विशेष प्राण संस्था के रूप में सात ही पितर सिद्ध होते हैं—अग्निष्वात्त, बर्हिषद्, सोमसद्, हविर्भुज्, सोमप, आज्यप तथा सुकाली। ये सातों पितर भी ऋषियों से उत्पन्न होते हैं। वे ऋषि हैं—मरीचि अथवा पुलस्त्य, अत्रि अथवा मरीचि, विराट्, अङ्गिरा, भृगु, पुलस्त्य तथा वसिष्ठ। इनमें प्रथम परिगणित मरीचि, अत्रि और विराट् अमूर्त हैं अर्थात् तत्व रूप से स्थिति पाते हुए निराकार हैं, आगे के चार मूर्तिमान् हैं—यह मान्यता है। अग्नि, यम, सोम ये तीनों क्रमशः अग्निष्वात्त आदि से आज्यप तक के पितरों के सम्बन्धित देवता माने जाते हैं। सुकाली पितरों का किसी देवता से सम्बन्ध नहीं होता। वसु, रुद्र, आदित्य ये तीनों देव पितरों को तृप्त करनेवाले हैं। एवं च भृगु, अङ्गिरा, अत्रि ये तीनों ऋषि क्रमशः अग्निष्वात्त आदि से आज्यप तक के पितरों के ऋषि संभावित हैं। वेद में इनमें अतिरिक्त जो अथर्वागण रूप ऋषि विश्रुत है—वे तो भृगु और अङ्गिरा के समानभाव के होने से उनसे अतिरिक्त गणना में नहीं आते, अतः तीन ही ऋषि मानना उचित है। सुकाली पितरों के तो वसिष्ठ परंपरागत ऋषि हैं। ये मरीचि आदि ऋषि विराट्मनु से उत्पन्न होते हैं और वह मनु हिरण्यगर्भ से उत्पन्न है। मनुस्मृति में यह ही कहा गया है—

"हिरण्यगर्भ से उत्पन्न मनु के जो मरीचि आदि पुत्र हैं—उन सात ऋषियों के पुत्र रूप में पितृगण माने गए हैं।"

"ऋषियों से पितरों की उत्पत्ति हुई है और पितरों से देव, दानवों की तथा देवदानवों से चराचर जगत् की क्रमशः उत्पत्ति हुई।"

इस प्रकार अग्निष्वात्त आदि पितर हैं, मरीचि आदि पितामह हैं मनु-प्रपितामह तथा हिरण्यगर्भ वृद्ध प्रपितामह हैं इस रीति से इन सब की पितृपरम्परा सिद्ध हो जाती है।

कुछ विद्वानों ने कहा है कि 'वेद के अवान्तर श्रुति वचनों में अवम, ऊर्व और काव्य नाम के तीन पितृवर्ग विशेष रूप से कहे गए हैं—उनका आख्यान न होने से इस पितृ व्याख्या में न्यूनता है, ऐसी शङ्का नहीं करनी चाहिये—क्योंकि **"उदीरतामवर उत्परासः"** आदि पितृ परिचायक प्रसिद्ध मन्त्र में परिश्रुत अवम-मध्यम नामक पितरों के ही अवान्तर श्रुति भाग में अवम आदि नाम अभिनीत हुए हैं—इनका उनमें ही अन्तर्भाव मानना समुचित है। इनकी पृथक् सत्ता का अन्य कोई प्रमाण नहीं मिलता है। मन्त्र की व्याख्या इस प्रकार है—

"अवर, मध्यम एवं पर श्रेणी के पितर हमारे लिए सौम्य (अनुग्रह करने वाले) बनते हुए (हमारी) उन्नति का कारण बनें। ऋतु को पहिचाननेवाले

अहिंसक पितर प्राणप्रदाता है। ऐसे वे पितर हमारी प्रार्थना सुनें, हमारी रक्षा करें।"

इसके अतिरिक्त वायु पुराण के वचनों के आधार पर भी कुछ विद्वान् इस प्रकार विमति प्रकट करते हैं कि यहां तो अग्निष्वात्त आदि तीन ही दिव्य पितरों का आख्यान है—अथवा अग्नि आदि को मिलाकर छह पितर कहे गए हैं। पुराण में तो आठ दिव्य पितर परिगणित हैं। यथा—

"कव्यवाल, अनल, सोम, यम, अर्यमा, अग्निष्वात्त, बर्हिषद्, तथा सोमपायी ये पितृ देवता हैं"

तेन कव्यवालाऽर्य्यम्णोरनाख्यानान्न्यूनतेति चेन्न। तयोः पित्रन्तरतया श्रुतावप्रसिद्धेः। वस्तुतस्तु कव्यवाडित्यग्नेर्विशेषणम्। अर्य्यमेति यमस्येत्यदोषः। कव्यवाल इति त्वपपाठः। स्वरद्वयमध्यस्थतायां डकारस्य दुःस्पृष्टत्वसम्भवेऽप्यकारान्तत्वासम्भवात्। तदित्थं षड् वा त्रय एव वा दिव्यपितरो नेयाः। अथाहुः—अन्येऽपि पितृगणाः पुराणे प्रसिद्ध्यन्ति—

रश्मिपाः, उपहूताः आयन्तुनः, स्वादुषदश्चेति। तदुक्तं नागरखण्डे—

**अग्निष्वात्ता बर्हिषद आज्यपाः सोमपाः स्मृताः।**
**रश्मिपा उपहूताश्च तथैवायन्तुनः परे॥**
**तथा स्वादुषदश्चान्ये स्मृता नान्दीमुखा नृप।**
**एते पितृगणाः ख्यातास्ते च देवसमुद्भवाः॥**
**आदित्या वसवो रुद्रा नासत्यावश्विना अपि।**
**संतर्पयन्ति ते चैतान् मुक्त्वा नान्दीमुखान् पितॄन्॥ इति॥**

चेन्नैतदस्ति। रश्मिपादीनां पृथक् पितॄणां श्रुतिष्वप्रसिद्धेः। पुराणेषु चाप्रसिद्धेः। ननूक्तं नागरखण्डवचनमिति चेन्न। बालचापलतयोपक्षिप्तवचनानामेषां पुराणवचनत्वाभावात्। न हि पुराणेषु विक्षिप्तैः प्रक्षिप्ता अपि श्लोका वचनाभासाः प्रमाणानि संभवन्ति। तेषामृष्यसंवादात्। वस्तुतस्तु—

"**उपहूताः पितरः सोम्यासो बर्हिष्येषु निधिषु प्रियेषु**"—इति ऋङ्मन्त्रे कृताह्वानार्थमुपहूतपदं श्रूयते एवमेव—

"**आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानै**" रिति मन्त्रे आयन्तु नः—इति पदद्वयमस्माकं समीपमायान्तु इत्येतदर्थकं श्रूयते। एवमेवान्यत्रा-

न्यत्र स्वादुषदो रश्मिपा इत्येतद् द्वयमपि विशेषणविधया श्रूयते, तत एवार्थानभिज्ञैः कैश्चिदेवमन्येऽन्ये पितर उपकल्पिता इत्युपेक्ष्यन्ते। यदपि विष्णुधर्मोतरे—"पितॄणां सप्तगणा भवन्ति सुभास्वराः, बर्हिषदः, अग्निष्वात्ताः,—इति त्रयो मूर्तिविहीनाः, कव्यादाः, उपहूताः, आज्यपाः, सुकालिनः, इति चत्वारो मूर्तिमन्तः। इत्येवं हविष्मदर्थतयोपहूतपदं प्रयुज्यते तदपि चिन्त्यम्, सर्वेषामुपहूततायाः श्रुत्या लाभाद्धविष्मतामेवोपहूतताया अपार्थत्वात्। नन्दिपुराणे तु—

"शुद्धमूर्त्तयः पितरः पितृयाजिनां योनयः पंचधा—
अग्निष्वात्ताः, वर्हिषदः, काव्याः, सुकालिनः, यामाः।"

इत्याख्यायन्ते। तत्र हविष्मन्त एव यामाः स्युः, एवमाज्यपादीनां च सुस्वधादीनि नामान्तराणि नेयानि। यत्तु हारीतस्मृतौ—

सोमो यमोऽङ्गिराश्चैव सोमपाः पितरस्तथा।
वर्हिषदोऽग्निष्वात्ताश्च हुतादः षड्विधो गणः॥
चन्द्रमा ऋतवश्चैव भृतं योऽग्निर्दहत्यपि।
सोमोपहूताः प्राक्सोमा अनोजानाश्च ब्राह्मणाः॥

इत्येवं सोमाद्यनुबन्धेन चन्द्रादयः समाख्यायन्ते। तत्रेतेष्वेतेषां सन्निधानमात्रं विवक्षितं द्रष्टव्यमिति दिक्।

**इतीमे प्रेतपितरः स्वरूपतः प्रदर्शिताः।**

उपरोक्त पितृ परिगणना में कव्यवाल और अर्यमा का व्याख्यान नहीं होने से न्यूनता रह जाती है। ये आशङ्का भी उचित नहीं है—क्योंकि इन दीनों का स्वतन्त्र पितृभाव वेद में सम्मानित नहीं है। वास्तव में तो कव्यवाड् यह अग्नि का विशेषण हैं। अर्यमा यह यम का विशेषण है—अतः कोई दोष नहीं माना जा सकता। कव्यवाल, ऐसा अकरान्त पाठ तो अशुद्ध है।

व्याकरण की परिभाषा से दो स्वरों के मध्य में स्थित होने के कारण डकार के स्थान में लकार की श्रुति भले हो जाय किन्तु अकरान्त होना तो असंभव है। इस प्रकार सिद्धान्ततः छह अथवा तीन दिव्य पितर ही मानने योग्य हैं। कुछ विद्वानों का कथन है कि अन्य भी पितृगणों का वर्णन पुराणों में मिलता है जैसा कि—

"रश्मिपायी, उपहूत, आयन्तुन और स्वादुष नाम के पितरों का उल्लेख नागर खण्ड में परिगणित हुआ है। उस गणना में निम्न परिगणन है—अग्निष्वात्त, बर्हिषद्, आज्यप, सोमप, रश्मिपायी, उपहूत, आयन्तुन, स्वादुषद

तथा नान्दीमुख । देववर्ग के समुत्पादक ये पितृगण प्रख्यात हैं । आदित्य, वसु, रुद्र तथा नासत्य नाम से कहे जाने वाले दोनों अश्विनो कुमार भी नान्दीमुख पितरों को छोड़कर इन अन्य सब पितरों को तृप्त करते रहते हैं ।"

नागर खण्ड की ये विवेचना समुचित नहीं है । रश्मिपायी आदि पितरों की पृथक् गणना श्रुति सम्मत नहीं है । वायु पुराण में भी इनका उल्लेख नहीं है । नागर खण्डोक्त ऐसे वचन तो बाल चापल्य के समान किसी व्यक्ति विशेष के प्रक्षिप्त वचन है, ये पुराणवचन नहीं हो सकते । पुराणों में कुछ विक्षिप्तों द्वारा प्रक्षिप्त ऐसे श्लोक जिन को वचनाभास कहा जा सकता है, कथमपि प्रमाण नहीं माने जा सकते क्योंकि उनमें ऋषि प्रोक्तता नहीं होती है । वास्तव में तो 'उपहूताः पितरः सोम्यासः" आदि ऋग्वेद के मन्त्र में आह्वान करने के अर्थ में उपहूत कहा जाता है । इसी प्रकार "आयन्तु नः पितरः सोम्यासः" आदि मन्त्र में 'आयन्तु नः ये दो पद हैं—इनसे वे पितर हमारे समीप आवें यह अर्थ ही परिश्रुत होता है । इसी प्रकार अन्यान्य स्थानों में स्वादुषद और रश्मिप भी विशेषण रूप में ही सुने जाते हैं । वास्तविक अर्थभाव को न समझने वाले कुछ अनभिज्ञों ने अन्यान्य पितरों की भी नई कल्पना कर डाली है । वे सब उपेक्षणीय हैं चिन्तन योग्य नहीं हैं । विष्णुधर्मोत्तर पुराण में भी जो यह कहा गया है कि "पितरों के सात गण होते हैं—सुभास्वर, बर्हिषद, अग्निष्वात्त ये तीन तो मूर्ति विहीन हैं, और कव्याद, उपहूत, आज्यप तथा सुकाली ये चार मूर्तिमान् हैं । यहां भी हविष्मान् के लिये उपहूत पद का प्रयोग किया जा रहा है—यह भी अनिर्णीत होने के कारण विचारणीय है । क्योंकि श्रुति द्वारा तो सब पितरों के लिये उपहूतता बताई गई है तब केवल हविष्मनों के लिये ही उपहूत पद का प्रयोग व्यर्थ हो जाता है ।

नन्दि पुराण में तो "पितृयाग करने वालों के लिए शुद्धमूर्ति के पांच मूल पितर अनिष्वात्त, बर्हिषद, काव्य, सुकाली तथा याम नाम के ख्यात हुए हैं ।" उनमें हविष्मन्तों को ही याम पदवाच्य मानना चाहिये, इसी प्रकार आज्यप आदि के लिये सुस्वधा आदि नामों को ग्रहण कर लेना चाहिये । हारीत स्मृति के पितृ गणना क्रम में-सोम, यम, अङ्गिरा सोमपायी, बर्हिषद्, अग्निष्वात्त इन छह का एक गण बताकर आगे चन्द्रमा, ऋतु, अग्नि, सोमोपहूत, प्रक्सोम तथा अनीजान (निष्कलङ्क) ब्राह्मण इन सबका भी सोम आदि के अनुबन्ध से पितृत्वेन आख्यान किया है—उसका तात्पर्य पितरों में चन्द्रमा आदि का सन्नि-धान मात्र रहता है यही समझना चाहिये ।

इस प्रकार इन प्रेतपितरों का स्वरूप लक्षण बताया गया ।

## अथ प्रेतपितॄणां विज्ञानम् ।

अथैषां प्रेतपितॄणां किञ्चिद्विज्ञानमत्र व्याख्यायते । ऋतुपितरो दिव्यपितर-

श्चैतन्मनुष्यशरीरं जनयन्तो भोगलोकेभ्यः कर्म्मभोगानन्तरं प्रत्यावृत्तस्य कर्म्मात्मनो भूतात्मनो मूर्तियोनिं महान्तमात्मानं प्रजनयन्ति—

**तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव च ।**
**उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः ।। इति मनुः स्मरति**

**(मनुस्मृतिः १२ । १४)**

तमेतं भूतात्मानमन्वाभक्तस्तमनुगृह्णानोऽयं महानात्मा मानुषशरीरत्यागादूर्ध्वं चान्द्रमसत्वाच्चन्द्रमसमेवोपसंक्रमते । तथा च श्रूयते कौषीतकिश्रुतौ—

"**ये वैके चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति** तत इतो लोकात् प्रयन्तीति प्रेता उच्यन्ते ।" ते च शरीरत्यागकालिकचन्द्रस्थितिमनूर्द्ध्वमूर्द्ध्व प्रयन्तस्त्रयोदशनाक्षत्रमासपूर्तौ चन्द्रमसमभिप्रपद्यन्ते । यस्मिन्नृतौ प्रमीयते तेनैव चतुर्ना सोऽतिवाहिनो भवति । तथा च श्रूयते—

**यस्मिन् वा ऋतौ पुरुषः प्रमीयते सोऽस्यामुष्मिन् लोके भवति । यदि वसन्तौ प्रमीयते वसन्तो भवति, यदि ग्रीष्मे ग्रीष्मः ।"** (तै. ब्रा. १।६)

"सपिण्डत्वेन प्रतिपन्नाः सप्तविधा मनुष्यपितरो गन्धर्वशरीराः—प्रेतपितरो नाम । ते द्विविधाः—पिण्डभाजोऽवरा अश्रुमुखाः, लेपभाजस्तु परा नान्दीमुखाः।"

वसुभीरुद्रैरादित्यैरपिवाऽग्निभिःसहचरिता अग्निलोकस्था अश्रुमुखाः । अथ येऽत ऊर्ध्वं गता वैश्वदेव्यसहचारिणो दिव्यलोकस्थास्ते नान्दीमुखाः ।

**"तत्र यज्वानो गृहमेधिनः पितरोऽग्निष्वात्ताः । यज्वानः पितरो बर्हिषदः सोमेन त्विष्टवन्तः पितरः सोमसदः ।"**

त्रिविधा हीमे पितरो भवन्ति—सपिण्डाः, सोदकाः सगोत्राश्च । उपरिष्टाच्चावस्ताच्चासप्तमात् सपिण्डाः। आचतुर्दशात् सोदकाः । एकविंशात्—सगोत्राः । अत ऊर्ध्वा ज्ञातयो भवन्ति । तदेषां रहस्यमन्यत्र विशिष्य वक्ष्यामः । इह तावत्किञ्चिदुच्यते—

## प्रेतपितरों की विज्ञान विवेचना ।

अब इन प्रेतपितरों का सृष्टि सम्बन्धी विज्ञान भाव यहां प्रस्तुत हो रहा है । पूर्व कथित ऋतु पितर और दिव्य पितर इस मनुष्य शरीर को उत्पन्न करते हुए स्वर्ग आदि भोग

लोकों से अपने कर्मफलों के भोग के अनन्तर पृथ्वी पर लौट कर आये हुए कर्ममय जीवात्मा जो कि पंच भूतों से समन्वित भूतात्मा है—उसको आकार देने के कारण रूप महान् आत्मा (बुद्धितत्व) का प्रथम सर्जन करते हैं। जैसा कि मनु का प्रवचन है—

"महान् और क्षेत्रज्ञ ये दोनों पंच भूतों से सगर्भित होकर छोटे बड़े सब जीवों में भूतात्मा में व्याप्त होकर रहते हैं"

इस भूतात्मा में अन्तः प्रविष्ट ये महान् आत्मा भूतात्मा पर अनुग्रह करता हुआ मनुष्य शरीर के त्याग देने के अनन्तर स्वयं चन्द्रमा का अंश होने के कारण चन्द्रमा में ही संक्रमण करता है।

जैसा कि कौषीतकी का श्रुति वचन है—

"जो प्राणी इस लोक से प्रयाण करते हैं—वे सब चन्द्रमा में ही जाते हैं"

क्योंकि वे प्रयाण करते हैं अतः प्रेत कहे जाते हैं। वे शरीर त्याग काल से आरम्भ कर चन्द्रमा की ओर अनुगामी होते हुए ऊपर ही ऊपर बढते रहते हैं और नक्षत्र सम्बन्धी तेरहवें महीने के पूर्ण होने पर चन्द्रमा में पहुंचते हैं। जिस ऋतु में प्राणी मरता है—उसी ऋतु में वह वहां पहुंचते हैं। जैसा कि श्रुति वचन है—

"जिस ऋतु में पुरुष मर जाता है, वही उसको यहां मिलता है। अर्थात् वह इस लोक पर उसी ऋतु में पहुंच जाता है। यदि वसन्त में मर जाता है तो यहां वसन्त ही उसका ऋतु है। ग्रीष्म में हो तो ग्रीष्म हुई।"

सापिण्ड भाव से समन्वित सात प्रकार के मनुष्य पितर गन्धर्व शरीर धारण किये हुए प्रेत पितर कहे जाते हैं। वे दो रूपों में विभक्त हैं—दिए गए अन्न पिण्डों को ग्रहण करने वाले अवर नाम के अश्रुमुख पितर, तथा लेप मात्र को ग्रहण करने वाले नान्दीमुख। (भोजन परिवेषणानन्तर जो हाथ में लगी रहने वाली चिकनाहट होती है वह लेप कही जाती है, प्रपितामह से ऊर्ध्व श्रेणी के पितर लेप भागी होते हैं।)

वसु-रुद्र-आदित्य रूप अग्नियों के सहचारी अग्निलोक में रहने वाले अश्रुमुख होते हैं। इनके अतिरिक्त वे पितर जो उन से ऊपर पहुंच कर विश्वेदेवों के सहचारी बनते हुए दिव्य लोक में स्थिति पाते हैं—वे नान्दीमुख हैं। "वेद वचनानुसार-उन अश्रुमुख पितरों में जो जीवन काल में यज्ञ न करते हुए गृहस्थाश्रम में रहे वे पितृ भाव में जाकर अग्निष्वात्त कहे जाते हैं। तथा यजन करने वाले वे पितर वर्हिषद् कहे जाते हैं। जो सोमद्वारा इष्टि करते रहे वे सोमसद् कहे जाते हैं।"

ये पितर तीन प्रकार के होते हैं—सपिण्ड, सोदक तथा सगोत्र । ऊपर और नीचे की सात पीढ़ी पर्यन्त सपिण्ड होते हैं । चौदह पीढ़ी पर्यन्त सोदक होते हैं । इक्कीस पीढ़ी पर्यन्त सगोत्र माने जाते हैं । इनसे आगे केवल सजातीय माने जाते हैं । इनका रहस्य विशेषतया अन्यत्र कहा जाएगा, यहां सामान्यतः कुछ स्पष्टीकरण किया जाता है—

आनन्द-विज्ञान-मनःप्राणान्नपंचकोशोऽयं सर्वः शरीरी पुरुषो भवति । तत्रायं सर्वबहिर्धा अन्नमयकोशः । तदन्तरान्तरक्रमे सर्वान्तरतोऽयमानन्दमयकोशः । आनन्दमयस्य पुरुषविधत्वमनुपुरुषविधोऽयमन्नमयकोशः । आनन्दमये विज्ञानमयस्तत्र मनोमयस्तत्र प्राणमयस्तत्रायमन्नमयः कोश उपधीयते । प्राणे चान्नोपधानं सप्तचितिकं भवति । तथा हि—आदौ शुक्रं ततः क्रमेण—मज्जा अस्थि मेदः स्नायवो मांसम् असृञ्जि रसत्वग्लोमानि इति । भुक्तस्यैवान्नस्य परिपाकवशादिमे रसासृङ् मांसमेदोऽस्थिमज्जाशुक्रौजोमनांसि धातवो विकारा उत्पद्यास्मिन् प्राणकोशे प्रणिधीयन्ते । तत्रैतदन्नमयं मनः—चान्द्रत्वाद्दिव्यम् । ओजस्तु वायुरसत्वात् आन्तरीक्ष्यम् । अथ शुक्रान्तः पार्थिवो भावः । तदित्थं—

**"सप्तचितिकोऽयमन्नमयकोशः शरीरम् :"**

रेतः, श्रद्धा, यशः—इति हि चान्द्रमसास्त्रयो भावाः शुक्राण्योषधीर्जनयित्वाऽन्नमावापः कल्पते । तत्रेदं शुक्रं रेतः सोमरसश्चन्द्रकिरणात् प्रवृज्यौषधिद्वारैतस्मिन् शारीरे प्राणे प्रचीयते । अथैतस्मिन् रेतस्येष चन्द्रः प्रत्युदयं श्रद्धायशसी नक्षत्रभेदेनोपदधाति । जन्मनक्षत्रादारभ्यैतदष्टाविंशतिनक्षत्राणि यावत् प्रत्यहं नक्षत्रभेदात् प्रभिद्यमानाः सहःसंज्ञाः सोमरसा अष्टाविंशेऽह्न्येकमष्टाविंशतिकलं पिण्डं जनयन्ति ।

किञ्चिदूनयाऽह्नामष्टाविंशत्या स एकैको नाक्षत्रो मासः संपद्यते । तथाविधैर्मासैरभिप्लुतैः षष्ट्युत्तरयाऽह्नां त्रिशत्या पूर्णत्रयोदशमासोऽयमेकः संवत्सरः संपद्यते । तथा चैकस्मिन् संवत्सरे त्रयोदशामी मासिकाः पिण्डा जायन्ते ।

अथ षड्भिः षड्भिर्मासैर्द्वौ षाण्मासिकावन्यौ । अथैवं द्वादशभिर्मासैः सांवत्सरिकोऽयमन्यः । तेनैते पिण्डाः षोडशमासिकाः प्रतिपुरुषशरीरमेकैकस्मिन् संवत्सरेऽभिनिवर्तन्ते इति भाव्यम् । तत्र प्रतिमासमन्यान्यमासिकपिण्डस्याभिनिवृत्तौ पूर्वः पूर्वः पिण्डोऽधःस्रोता वा तिर्यक्स्रोता वा ऊर्ध्वस्रोता वाऽपक्षीयते । व्यवायिनां गृहमेधिनामधोरेतसां पिण्डोऽयमधःस्त्रोतसा स्त्रीशरीरे

गत्वाऽपक्षीयते। गृहमेधिनामपि संयतानां शुक्रप्रवाहस्यैतच्छरीरपरिपुष्टिहेतुभूतौ-जोरसजनकतया पिण्डोऽयं तिर्यक्स्रोतसाऽपक्षीयते। ब्रह्मचारिणां तु यतीनां योगिनां मनीषिणामहर्निशचिन्ताशीलत्वादूर्ध्वरेतसामूर्ध्वं शीर्षिण गत्वाऽयं शुक्रप्रवाहो मनोभावाय संपद्यते। यावदधिकं चिन्तयते तावच्छुकं वीयते तेन ते कृश्यन्ति न मेद्यन्ति न प्रजा जनयन्ति। तेष्वेतेषु पिण्डोपक्षयेष्ववपतनमापतन-मुत्पतनं चेति शब्दा भवन्ति। इत्थं च प्रतिमासं क्षीणशुक्रपिण्डानां चन्द्रोदययोगा-दन्यश्चान्यश्च पिण्डोऽविरतं प्रजायते। तेन चानुपलं षोडशमासिकपितृपिण्डसंपन्न एवायं पुरुषो जीवनयात्रां धत्ते इति स्थितिः।

आनन्द-विज्ञान-मन-प्राण-अन्न इन पांच कोशों से संपन्न ये सारा शरीर पुरुष कहा जाता है। उनमें ये सबसे बाहर का अन्नमय कोश है। इस कोश के अन्तराल में भीतर ही भीतर सर्वान्त में गूढ ये आनन्दमय कोश है। वास्तव में आन्दमय कोश की ही पुरुष रूपता है—उस पुरुष का अनुगामी यह अन्नमय कोश है—अतः यह भी पुरुष पद वाच्य हो जाता है। आनन्दमय कोश में विज्ञानमय (बुद्धितत्व) का नया आधान होता है, फिर उस में मनोमय कोश का, फिर उन तीनों में प्राणमय कोश का तदनन्तर अन्नमय कोश का उप-धान होता है। प्राण में अन्न का यह उपधान सात चितियों (चिनाई) के रूप में होता है। प्राण के सामीप्य परिगणन में सर्वप्रथम शुक्र (वीर्य) तदनन्तर क्रमशः मज्जा, अस्थि, मेदा स्नायु (नसें), सांस, रक्त, रस, त्वचा, और लोम होते हैं। खाये हुए अन्न का जाठराग्नि द्वारा परिपाक हो जाने पर ये रस, रक्त, मांस, मदा, अस्थि, मज्जा, शुक्र, ओज, मनरूप धातु विकारमय उत्पन्न होकर प्राणमय कोश में प्रकृष्ट भाव से निहित होते हैं। उनमें ये अन्नमय मन चन्द्रमा का अंश होने के कारण दिव्य होता है। अर्थात् द्युलोक से संबद्ध रहता है। ओज नाम का धातु वायु के रस से निर्मित होने के कारण अन्तरिक्ष से संबद्ध रहता है। इसके अतिरिक्त शुक्र पर्यन्त पार्थिव भाव होते हैं। इस प्रकार—

"सात चितियों से बना यह अन्न मय कोश शरीर होता है"।

रेत (वीर्य-शुक्र), श्रद्धा, यश ये तीनों चन्द्रमा से समुत्पन्न भाव हैं—अर्थात् चन्द्र के रससय सोम की इनमें भावना प्रधान रहती है। इनमें अनेक प्रकार के शुक्र (बीज) अनेक प्रकार की ओषधी रूप (अन्नों) को उत्पन्न करके उन अन्नों को जीवन का आधार बना देता है। प्राकृतिक यज्ञ विज्ञान प्रक्रिया में ये रेत-शुक्र किंवा सोमरस जो चन्द्रमा की किरणों में रहता है—वह उन किरणों से पृथक् होकर अन्न रूप ओषधी भाव में प्रविष्ट होता है और अन्न के द्वारा इस शरीर में प्रवेश पाकर प्राणों से संचित हो जाता है, अर्थात् प्राणों का पोषक बन जाता है। यह स्मरणीय है कि चन्द्ररस सम्बन्धी अपने इस रेत भाग में चन्द्रमा अपने प्रत्येक उदय काल में नक्षत्रों के भेद से श्रद्धा और यश का सामीप्य रूप उपधान करता है। चन्द्रमा से आने वाले ये सोमरस अति सूक्ष्म भाव के होते हैं—जन्म

नक्षत्र से आरम्भ करके २८ (अट्ठाईस) नक्षत्र पर्यन्त नित्य के नक्षत्र भेद से भिन्न-भिन्न भावानुगता ये सोम कला-जिनकी वेद परिभाषा में 'सहस्-सहः') संज्ञा होती है। इस प्रकार २८ वें दिन अति सूक्ष्म कला रूप ये सोमरस अब २८ कलाओं से संयुक्त होकर पिण्ड भाव को उत्पन्न करती हैं। अट्ठाईसवें दिन की पूर्ति में जब थोड़ी सी कमी रहती है—तब एक-एक नक्षत्र सम्बन्धी मास माना जाता है। २८ दिन वाले इन नक्षत्र मासों की संख्या तीन सौ साठ दिन वाले संवत्सर की पूर्ति के लिये तेरह मास की होती है—अतः नाक्षत्रिक संवत्सर तेरह मास का होता है। यही कारण है कि मरणोत्तर एक संवत्सर (वर्ष) में ये तेरह मासिक पिण्ड दिये जाते हैं।

इनके अतिरिक्त छह-छह मास में दो छह मास के पिण्ड और वर्ष के अन्त में अन्य एक वार्षिक अथवा सांवत्सरिक नाम के पिण्ड होते हैं। इस प्रकार सोलह मास के ये १६ पिण्ड प्रत्येक पुरुष के शरीर में एक-एक संवत्सर में पूर्णतया सत्ता पाते हैं, यह समझना चाहिये। उन मासिक पिण्डों का प्राकृतिक यज्ञभाव यह होता है कि नये मासिक पिण्ड के आ जाने पर उससे पूर्व-पूर्व के पिण्ड सामान्यतया कोई तो अधः स्रोता निम्नपथ में बहने वाले होते हैं अथवा कोई तिरछे मार्ग के अनुगामी हो जाते हैं तथा कोई २ ऊर्ध्व स्रोता बन जाते हैं। इस तरह वह पिण्ड भाव क्षीण हो जाता है। काम-वासना प्रधान मनुष्य व्यवायी कहा जाता है। ऐसे जो व्यवायी गृहस्थजन हैं, वे अधोरेतस् अर्थात् निम्नमार्ग में जिनका शुक्र बह रहा है—उस शुक्र में आता हुआ वह पिण्ड सम्बन्धी तेज उस अधोमार्ग के बहाव से स्त्री के शरीर में जाकर अपक्षीण हो जाता है। गृहस्थाश्रम में रहते हुए भी जो वीर्य रक्षा करते हैं अर्थात् संयम से रहते हैं, उनके शुक्र का प्रवाह इस शरीर के परिपोषण के हेतु भूत ओज रूप रस को उत्पन्न करता है—इस प्रकार तिरछी गति से प्रवर्तमान होकर शुक्रानुगत पिण्ड का तेज तिर्यक् स्रोत से बहकर क्षीण हो जाता है। जीवन भर ब्रह्मचर्य का पालन करने वाले यति जो योग साधना में रत रहते हैं, उन मनीषियों के शुक्र की गति ऊर्ध्व स्रोत की हो जाती है, वे अहोरात्र चिन्तनशील रहते हैं। इन ऊर्ध्वरेता पुरुषों का शुक्र प्रवाह ऊपर शिर के भाग में जाकर मन का पोषक बनता है। वे जितना अधिक चिन्तन करते हैं उतना उनका शुक्र क्षीण हो जाता है, उससे वे कृश भाव में ही रहते हैं, शरीर से पुष्ट नहीं हो पाते और न सन्तान उत्पन्न कर पाते हैं। पिण्डों के इस तेजक्षय प्रकरण में अवपतन, आयतन, उत्पतन इन शब्दों का प्रयोग होता है। इस प्रकार शुक्र में अनुगत पिण्डतेज के क्षीण हो जाने पर भी प्रत्येक मास के चन्द्रोदय योग से अन्यान्य २८ कला सम्पन्न चन्द्र-रस-रूप-पिण्ड निरन्तर नये उत्पन्न होते रहते हैं। इस कारण प्रतिक्षण यह जीव उन षोडश-मासिक पितृ-पिण्ड भावों से सम्पन्न रहता हुआ ही जीवन यात्रा पूर्ण करता रहता है, ये वस्तुस्थिति है।

**यद्यप्यस्य पिण्डस्यैवं सामान्येन पतनमाख्यातं तथाप्यस्याधःस्रोतःपक्षे कञ्चन विशेषमाख्यास्यामः। द्विविधं तावदधःस्रोतो भवति-पत्त्यं चापत्त्यं चेति।**

योषाशोणिताग्नौ सुतोऽयं रेत: सोमो यावदेवाष्टमसन्तानाय सूनुर्भवति तदपत्यम् । अष्टमपुरुषपर्य्यन्तमस्य रेतस: संतायमानस्य पृथिव्यां स्थायित्वाभ्युपपत्त्या निपतनायोग्यत्वात् । अप्येवं चन्द्रलोकस्थानां पितृ़णां कतिपयेंऽशा: श्रद्धासूत्रेणोपनिबद्धा: सन्तानरूपेण पृथिव्यां तिष्ठन्तीति कृत्वा तेनोपष्टम्भितास्ते पितरश्चन्द्रलोकान्न पतन्ति । संतानस्थानामष्टाविंशतिपैतृकपिण्डनिवापानां सपिण्डीकरणद्वारा पुन: प्रत्यर्पणेन तेषां पितृ़णां लब्धाष्टाविंशत्यात्मपिण्डतया पतितपिण्डत्वायोगात् । अतश्चैते अष्टाविंशतिपितृपिण्डप्रत्यर्पणकृतोऽष्टौ संताना अपत्यानि । अपि चैतत् पिण्डात्मकं पितृरूपं सन्तानरूपेणाधस्तात् पृथिव्यां भवतीति तादात्म्योपपत्त्या पितृरूपमेवेदमपत्यमाख्यायते । अपशब्दोऽधस्तादर्थ: । अधस्ताद् भवतीत्यपत्यम् । अव्ययात्त्यप् प्रत्यय: । नि:सन्तानत्वे तु पितृ़णामेतानि रूपाणि पत्यानि । सप्तकलस्य पितृरूपस्य सन्तानकृतसपिण्डीकरणद्वारा प्रत्यर्पणेन पुनरष्टाविंशतिकलरूपताया असम्भावितत्वात् । अपि चेदं सन्तानव्यतिरिक्तं त्वधोरेत: पूर्ववत् प्रतिमासं पत्यम् । पूर्वमासपिण्डस्योत्तरस्मिन् मासे निरुपाख्यत्वेनाव्यवहार्य्यत्वात् । अयोनौ वन्ध्यागर्भे वा सिक्तं रेत: पूयते तस्मात् पत्यम् ।

यद्यपि शुक्रानुगत इस पिण्डरस का सामान्यतया पतन भाव कहा गया है तथापि अध: स्रोत पक्ष में अर्थात् शुक्र के निम्न प्रवाह विचार में कुछ विशेष कथनीय है । अध: स्रोत दो प्रकार का होता है—एक पत्य भाव में और एक अपत्य भाव में । स्त्री शरीरस्थ शोणितमय अग्नि में आहुति रूप से प्रसूत यह सोममय शुक्र अथवा रेत अष्टम सन्तान पर्यन्त पुत्र भाव में अपत्य कहा जाता है । अष्टम पुरुष पर्यन्त इस रेत का विस्तार होकर पृथ्वी पर जब पुरुष भाव से स्थायी हो जाता है—तब रेत में स्वाभाविक स्रोतभाव योग्यता नहीं रहती है । ऐसा हो जाने पर भी चन्द्रलोक में रहने वाले पितरों के कुछ अंश श्रद्धा रूप सूत्र से बंधे हुए सन्तान रूप से पृथ्वी में रहते हैं, इस कारण उनसे सहारा पाते हुए वे पितर चन्द्रलोक से नीचे नहीं गिरते हैं, क्योंकि उपहार रूप में समर्पित २८ कलायुक्त पितरों के पिण्डभाव जो सन्तान में स्थित रहते हैं उनका सपिण्डीकरण रूप श्राद्ध विधान के द्वारा पुन: चन्द्रलोकस्थ पितरों को समर्पण कर दिया जाता है—अत: उन पितरों को अपने २८ पिण्ड पुन: प्राप्त हो जाने से पिण्ड-पतन-जनित पतन-भाव उनका नहीं होता है । साथ ही यह भी स्पष्ट हो जाता है कि २८ पिण्डों को प्रत्यर्पण करने के अधिकारी आठ संतान अपत्य कहे जाते हैं—क्योंकि इनके कारण पूर्व पितर पतित नहीं होते । विशेषता यह भी है कि ये पिण्डमय पितृ-रूप ही सन्तान-रूप से नीचे पृथ्वी पर उत्पन्न होता है अत: तादात्म्य भाव से अर्थात् एकरूपता रहने से ये अपत्य पितृ-रूप ही से विख्यात होते है । ("आत्मा वै जायते पुत्र:" यह सिद्धान्त प्रसिद्ध है) । अप शब्द अधोभावार्थक होता है । पृथ्वीरूप अधोभाग में उत्पन्न होने से भी अपत्य संज्ञा मानी जाती है । अव्यय-रूप अप के आगे त्यप् प्रत्यय लगने से अपत्य शब्द बनता है । सन्तान न होने पर तो पितरों के वे रूप पतन योग्य हो जाते हैं । उन पितरों की जिनकी अपनी सात कलामात्र उनके रूप की रक्षा के लिये बची

रह पाती हैं, उनकी सन्तान द्वारा किए गए सपिण्डी करण से प्रत्यर्पण न होने से पुनः २८ कलाओं से परिपूर्णता संभव नहीं हो पाती है। एवं च सन्तति न होने की अवस्था में यह अधःप्रवाही शुक्र पूर्ववत् प्रत्येक मास में पतित होकर नष्ट हो जाता है अतः पत्य माना जाता है, पूर्व मास के पिण्ड की अग्निममास में सामीप्य न रहने से व्यवहार योग्यता नहीं रहती है। जिस रेत का सेचन योनि में नहीं होकर अन्यत्र प्रवाहित हो जाता है, अथवा जो वन्ध्या के गर्भ में सींच दिया जाता है— वह शुक्र सड़ जाता है—अर्थात् स्वभाव से पतित हो जाता है अतः पत्य कहा जाता है।

अथापत्यं सन्तानः। तत्रैतं सन्तानक्रमं वक्ष्यामः। चन्द्रजन्योऽयमष्टाविंशतिकलो मासिकः पितृपिण्डो व्याख्यातः। सोऽसृगग्नौ पितृस्तोमेन यज्ञेन संतानितो भवति। सप्तसंस्थोऽयं ज्योतिष्टोमवत् पितृस्तोमो यज्ञः। स जायाग्नौ पितृपिण्डरूपोऽयमात्मैव सोमः सूयते। स यदिह कृत्स्नमेवात्मानमुप्यात् स स्वयमात्मना विहीयेत स तमो गच्छेन्न जीवेत्। असुतस्य त्वयजमानस्यायं सन्तानो न स्यात्। तस्मादेष पितृपिण्डो द्वेधा विभज्यते। पितरः सूनवश्चेति। अष्टाविंशतिकलस्यात्मपिण्डस्य चतुर्थांशः सप्तकलो भागस्तावदात्मने ध्रियते। सन्तानसन्दर्भणस्य श्रद्धासूत्रस्यात्मनि संधारणार्थे तदुद्धारात्। ता एता आत्मधारणाः सप्तकलाः पितरः। आवापकर्त्तुरात्मन्येव यथास्थानमवस्थितेषु असुतेषु प्राणेषु पितृशब्दः। अथेतरे पिण्डभागा एकविंशतिकलाः सूनवः। प्रथमपात्रादुद्धृतानामधिपात्रान्तरमावापेन सूयमानत्वात् स एष प्रथमावापः ॥ १ ॥

अथैकविंशतिकलस्यैतस्य सूनुपिण्डस्यापि पुत्रशरीरस्थस्य पितृस्तोमसम्बन्धिन्यावापे द्वौ भागौ भवतः—पितरः सूनवश्चेति। एकविंशतिकलस्यात्मपिण्डस्य सार्द्ध तृतीयांशः षट्कलो भागः पितरः। इतराः पंचदशकलाः सूनवः। पौत्रशरीरप्रजननाय तदावापात्। सोऽयं द्वितीयावापः ॥ २ ॥

अथ पञ्चदशकलस्यैतस्य सूनुपिण्डस्यापि पितृस्तोमार्थमावापे द्वौ भागौ। पितरः सूनवश्चेति। तृतीयांश पञ्चकलाः पितरः। दशकलास्तु सूनवः प्रपौत्रशरीरारम्भणाय भवन्ति। सोऽयं तृतीयावापः ॥ ३ ॥

अथ पुनर्दशकलस्य सूनोरावापे द्वौ भागौ। सार्द्ध द्वितीयांशश्चतस्रः कलाः पितरः। शेषाः षट्कलाः सूनवो वृद्धप्रपौत्रशरीरारम्भणाः। सोऽयं चतुर्थावापः ॥ ४ ॥

अथ षट्कलस्य सूनोर्द्वौ भागौ—द्वितीयांशस्तिस्रः कलाः पितरः। शेषास्तिस्रोऽतिवृद्धप्रपौत्रशरीरारम्भणाः सूनवः। सोऽयं पञ्चमावापः ॥ ५ ॥

अथ त्रिकलस्य सूनोर्द्वौ भागौ—अध्यर्द्धांशो द्वे कले पितरः । एककलस्तु शेषोंऽशः सूनुः । स वृद्धातिवृद्धप्रपौत्रशरीराय भवति । स एव षष्ठावापः ॥ ६ ॥

अथैककलस्य सूनोर्न द्वौ भागौ । कात्स्न्र्येनात्मानमुच्छिद्यावपनाय प्रयत्नालाभात् । तथा चेयमेका कला पितृभाग एव निष्कृष्यते । न सूनुः । सवनीयसहोऽवसायात् सवनस्य कर्त्तुमशक्यत्वात् । तेनैतस्मिन् सप्तमावापे स पिण्डसन्तानो निवर्तते ।

पितृपिण्डसंतानविभागक्रमतालिका

| अधस्तन पीठिकाः | | सप्तपुरुषाः | संतानप्रजनने आवाप्याः पिण्डभागाः | पितरः पिण्ड वापाः | सूनवः पिण्ड तनयाः |
|---|---|---|---|---|---|
| १ | प्रथमः | बीजी पुरुष | २८ | ७ | २१ |
| २ | द्वितीयः | पुत्रसन्तानः | २१ | ६ | १५ |
| ३ | तृतीयः | पौत्रसन्तानः | १५ | ५ | १० |
| ४ | चतुर्थः | प्रपौत्रसन्तानः | १० | ४ | ६ |
| ५ | पञ्चमः | वृद्धप्रपौत्रसन्तानः | ६ | ३ | ३ |
| ६ | षष्ठः | अतिवृद्धप्रपौत्रसन्तानः | ३ | २ | १ |
| ७ | सप्तमः | वृद्धातिवृद्धप्रपौत्रसन्तानः | १ | १ | ० |
| ८ | अष्टमः | असपिण्डः सोदकः | ० | ० | ० |
| | | सपिण्डाः सप्तपुरुषाः | ८४ | २८ | ५६ |

अत्रोत्तरभावितः प्रातिस्विकोऽयं बीजपिण्डः । पितृक्रमागतस्तु पित्र्योऽयमावापपिण्डः । उत्पत्तिशिष्टेनावापपिण्डेनैवायं कृतात्मा जन्म लभते । गृहीतजन्मा त्वय षोडशवर्षादूर्ध्वं प्रातिस्विकमुत्पन्नशिष्टं बीजपिण्डं लभते । स यद्ययमावापपिण्डं पित्र्यमात्मानमनवाप्तः स्यान्न तर्हि जन्म गृह्णीयात् । न वा बीजपिण्डं तमाप्नुयात् । अत एवायं पितृभागं लब्ध्वा गृहीतजन्मा पुरुषः पितृऋणामृणी भवति । तथा च श्रूयते—

सन्तान क्रम की व्याख्या प्रस्तुत है । चन्द्रमा से उत्पन्न २८ कला के मासिक पिण्ड की व्याख्या की जा चुकी है । वह २८ कला का पिण्ड-गत-तेज शोणित-मय अग्नि में पहुंच कर पितृस्तोम यज्ञ के द्वारा सन्तान रूप से विस्तृत होता है (केन्द्र से आरंभ कर साम के

अन्तिम पृष्ठ पर्यन्त जो तेतीस देवता रूप भाग किये जाते हैं—उनको ही अहः पद से भी कहा जाता है, इनमें आदि के तीन भाग तो पिण्ड (शरीर) में ही प्रविष्ट रहते हैं, उनको छोड़कर आगे के ६-६ भागों का समुदाय कल्पित होता है उसे वैदिक परिभाषा में स्तोम कहा जाता हैं, छः स्तोमों की मिलकर वषट्कार संज्ञा हो जाती है।)

ज्योतिष्टोम के समान यह पितृस्तोम यज्ञ भी सात संस्थाओं में विभक्त होता है। वह पितृपिण्ड रूप ये आत्मा ही भार्या के शोणितरूप अग्नि में सोम का सवन करता है। वह यदि संपूर्णतया आत्मा का अर्थात् अपने आप का प्रसव कर दे, तब तो आत्मज्योति विहीन होकर घोर तम-भाव में डूबता हुआ मर ही जायगा। एवं च जब तक इस प्रकृति-यज्ञ का यजमान बनकर अपने शुक्र का सवन नहीं करेगा, तब तक संतान क्रम ही नहीं चलेगा। इस कारण इस पितृपिण्ड के दो भाग हो जाते हैं। एक स्वयं पिता का भाग और एक पुत्रों का भाग। अपने में समागत २८ काल के उस निज पिण्ड रस का चतुर्थ अंश सात कला रूप तो पिता स्वयं धारण किये रहता है। सन्तान क्रम को प्रवृत्त करने वाले श्रद्धा सूत्र को अपने में धारण करने के लिये उन कलाओं का आत्मधारण आवश्यक होता है। ये आत्मा को धारण करने वाली सात कला पितर भाव की ही होती है। बीज वपन करने वाले के पास अपने आप में जो बिना वपन किये हुए प्राण भाग हैं, उनके लिए ही पितृ पद का प्रयोग होता है। इन सात प्राण भागों के अतिरिक्त जो २१ कला वाले पिण्ड रस भाग हैं—वे पुत्रों के होते हैं प्रथम पात्र (शरीर) से निकालेगा तथा अन्य पात्र (शरीर) में वपन रूप प्रसव होने के कारण यह पहला आवपन (बोना) है ।।१।।

तदन्तर २१ कला के उस पुत्रपिण्ड के जिसका रस पुत्र के शरीर में स्थित रहता है, पितृस्तोम सम्बन्धी आवपन क्रम में दो भाग हो जाते हैं—पिता का तथा पुत्रों का, उसमें २१ कला के अपने पिण्डरस का साढ़े तीन अंश भूत ६ कला वाला भाग पिता का अपना रहता है, शेष १५ कला उसके पुत्र के होते हैं, पौत्र शरीर के उत्पन्न करने के लिए उसका आवपन होता है। यह दूसरा आवाप है ।।२।।

आगे १५ कला वाले इस पुत्र के पिण्डरस के भी पितृस्तोम विधि के आवपन में दो भाग हो जाते हैं।

पिता के और उसके पुत्रों के। पांच कला रूप तृतीय अंश पिता का। शेष दश कला-पुत्रों की प्रपौत्र के शरीर निर्माण के लिये होती हैं। यह तीसरा आवपन होता है ।।३।।

आगे पुनः पुत्रार्थ आवपन क्रम में उस दश कला वाले पिण्डरस के दो भाग हो जाते हैं। अढाई (२½) अंश रूप चार कला पिता में रहती हैं। शेष छह कला उसके पुत्रों में जाती हैं, वे वृद्ध प्रपौत्र के शरीर की निर्मापक होती हैं। यह चतुर्थ आवपन होता है ।।४।।

तदनन्तर वृद्ध प्रपौत्र की छह कलांश के भी दो भाग होते हैं—द्वितीयांश रूप तीन कला युक्त पिता होता है। शेष तीन कला अतिवृद्ध प्रपौत्र के शरीर का निर्माण करने वाली तत्पुत्रसम्बद्ध होती हैं। ये पञ्चम आवपन होता है ॥५॥

सर्वान्त में तीन कला के पुत्रांश के भी दो भाग होते हैं—आधे अंश के भीतर दो कला वाला पिता रहता है। एक कला का शेष अंश पुत्र का होता है। वह अंश वृद्ध से भी अतिवृद्ध प्रपौत्र के शरीर निर्माणार्थ होता है। ये ही छठा आवपन है ॥६॥

आगे एक कला वाले उस पुत्र कलांश के दो भाग नहीं होते। सर्वथा अपने जीवन का उच्छेद करने के लिए आवपन रूप प्रयत्न नहीं किया जा सकता है।

इस प्रकार वह एक कला पितृ भाग रूप में ही निकल जाती है। आगे पुत्र भाव में कोई कलांश प्रवृत्त नहीं हो पाता-क्योंकि सवन करने योग्य सह का (जिस सह को पहले पिण्ड का रस कहा जा चुका है) अवसान हो जाता है। अतः पुनः सवनात्मक यज्ञ नहीं किया जा सकता। इस प्रकार इस सप्तम आवपन में पहुंचकर उस पिण्ड का सन्तान भाव समाप्त हो जाता है।

उपरोक्त पितृपिण्ड के संतान विभाग क्रम की तालिका के रूप में यहां मूल में ७६ पृष्ठ पर परिलेख (रेखाचित्र) द्वारा स्पष्टीकरण कर दिया गया है।

प्रथम पुत्र उत्पन्न करके सन्तान क्रम का संचालक पिता में रहने वाला अपना निजी बीज रूप पिण्ड होता है। एवं पितृपरम्परा के क्रम से समागत पितरों से संबद्ध आवपन रूप पिण्ड होता है। उत्पत्ति के लिये दिये गये आवाप पिण्ड से ही यह जीवात्मा जन्म लाभ करता है। जन्मग्रहण के अनन्तर सोलह वर्ष के बाद-अपने उत्पादक पिण्डरस के अतिरिक्त वह अपने निजी बीज भाव के पिण्डरस को प्राप्त करता है। वह यदि पितरों से संबद्ध आवपन योग्य अपने पिण्ड रस भाग को प्राप्त न कर सके तो उसका जन्म नहीं हो सकता है। तथा बीज पिण्ड को भी वह नहीं पा सकता है। अतएव पितरों के अंश को प्राप्त कर के जन्म ग्रहण करने वाला पुरुष पितरों का ऋणी (कर्ज़दार) होता है।

जैसा कि वेद वचन है—

**"एष वै जायमानस्त्रिभिर्ऋणवाँ जायते—ब्रह्मचर्य्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः। एष वा अनृणी यः पुत्री यज्वा ब्रह्मचारी च" ॥ इति ॥** (तै.सं ६-३-१०-५)

तथा चायं पुरुषस्य महानात्मा चतुरशीतिकलः संपद्यते। षट्पंचाशत्कलाभिः पित्र्याभिरष्टाविंशतिकलाभिस्तु निजाभिरुपेतत्वात्। यथाहुः—

**"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः ।**
**पिण्डदः सप्तमस्त्वेषां सापिण्ड्यं साप्तपौरुषम् ॥"**

तद्यथा—अष्टाविंशतिकलाः स्वयमुपार्जिताः । षट्पंचाशत्तु कलाः षड्भिः पितृभिः परिदीयमानाः संसृज्यन्ते । पितुरेकविंशतिः, पितामहात्पञ्चदश, प्रपितामहाद्दश, वृद्धप्रपितामहात् षट्, अतिवृद्धप्रपितामहात् तिस्रः, वृद्धातिवृद्धप्रपितामहात् त्वेका । आसां चैकविंशत्यादिषु तिसृषु द्रव्यभूयस्त्वात् पिण्डशब्दः । द्रव्यकनीयस्त्वात्तु षडादिषु तिसृषु लेपशब्दः । प्रतिपुरुषं चैताश्चतुरशीतिकला अव्यभिचारेणोपसीदन्ति । एकैकस्येह सर्वस्य पुरुषस्य पुत्रत्वाच्च वृद्धातिवृद्धप्रपौत्रत्वाच्च ।

इत्थं चायमेकैको महान् पुरुषश्चतुरशीतियशा द्रष्टव्यः ।

प्रतिव्यक्तिगतानां चतुरशीतिमितानां सोमसहस्रां वर्गीकरणतालिका

| उपरितन-पीठिका | | | सप्तपुरुषाः सपिण्डाः | सपिण्डीकरणे निवाप्याः पिण्डभागाः | सपिण्डीकरणे स्वस्वधायिनः—सप्तसपिण्डाः पितृपुरुषाः | |
|---|---|---|---|---|---|---|
| ० | ८ | | असपिण्डः सोदकः | ०................................ | | |
| ६ | ७ | नान्दीमुखाः पितरः | वृद्धातिवृद्धप्रपितामहः | १ लेपभागी | १ वृद्धातिवृद्धप्रपितामहभागः | ३५ पित्र्या उत्पत्तिशिष्टाः |
| ५ | ६ | | अतिवृद्धप्रपितामहः | ३ लेपभागी | ३ अतिवृद्धप्रपितामहभागः | |
| ४ | ५ | | वृद्धप्रपितामहः | ६ लेपभागी | ६ वृद्धप्रपितामहभागः | |
| ३ | ४ | अश्रुमुखाः पितरः | प्रपितामहः | १० पिण्डभागी | १० प्रपितामह—दत्तभागः | |
| २ | ३ | | पितामहः | १५ पिण्डभागी | १५ पितामह—दत्तभागः | |
| १ | २ | | पिता | २१ पिण्डभागी | २१ पितृ-दत्त-भागः | |
| १ | १ | | सन्तानपुरुषः | २८ पिण्डदः | २८ स्वोपार्जित भागः<br>२८ स्वीय उत्पन्नशिष्टः | |

अत्र चाष्टाविंशतिकलात्मके ह्यात्मनीने पिण्डेऽयमुप्तः षट् पुरुषीयः पित्र्या-

वाप: पुरुषस्य जीवनयात्रायै कल्पते। इत्यत: पुरुषस्येदं पैतृकमृणं भवति। स चात्मनीनपिण्डवद् द्वेधाऽस्मिन् पुरुषे संनिविशते। आत्मधेयोऽन्य:। तन्योऽन्य:। आत्मजीवनयात्रानिर्वाहिकाय चान्द्ररसातिग्रहाय सप्तग्राहा महत: स्वरूपारम्भका धातवो भवन्ति। एभ्यो हीमाश्चतुरशीतिर्यश:कला अहरहरात्मन्युत्तिष्ठन्ते। तस्मादमी उक्था:। तत्र एकं द्विकं त्रिकं चतुष्कं पञ्चकं षट्कमिति षड् धनानि पित्र्याणि। सप्तकं त्वेकं धनमात्मीयम्। तान्येतानि सप्तधनान्येवैते सप्तग्रहा अस्यात्मनो महतो रूपम्। सप्तधातुभि: कृतरूपोऽयं महानात्मा पुरुषेऽस्मिन्नष्टाविंशतिकलो भवति स आत्मधेयो भाग:। तदिह पितृभ्यो देयमृणं भवति।

अथ षट्पंचाशत्कलस्तन्य: स तनय:। तत्राप्येकविंशतिकलमात्मधनम्। पंचदशकं, दशकं, षट्कं त्रिकमेकमिति पञ्चत्रिंशत्कलाभि: पञ्च पित्र्याणि धनानि। तेषां सन्तानाय नियुक्तत्वादनृणत्वं भाव्यम्। तदिदं प्रजोत्पादनलक्षणमानृण्यं प्रथमं कर्म्म ॥१॥

चतुर्धा हि पितृभ्यो गृहीतानां धनानां पुन: पितृभ्य: प्रत्यर्पणादृणापकरणं चतुर्धा पश्यन्ति—१—प्रजोत्पादनेनान्यत्, २—सपिण्डीकरणेनान्यत् ३—श्राद्धेन त्वन्यत् ४—गयापिण्डदानेनान्यत्।

"ये उत्पन्न होने वाले प्राणी निश्चित रूप से तीन ऋणों से संयुक्त—कर्जदार होकर पैदा होते है—ब्रह्मचर्य के द्वारा ऋषियों का ऋण प्रत्यर्पित होता है। जो यज्ञ से देवताओं का तथा प्रजा रूप सन्तान क्रम से पितरों के ऋण का प्रत्यर्पण होता है। पुत्रवान् हो, यज्ञ करने वाला हो तथा ब्रह्मचर्य पालन करता हुवा वेदाध्ययनशील हो वही अनृणी अर्थात् कर्जा चुकाने वाला माना जाता है।"

इस प्रकार पुरुष का ये महान् आत्मा चौरासी कलाओं से सम्पन्न हो जाता है। उन में ५६ कला पितरों की होती हैं और २८ कलायें अपनी पा जाता है। जैसा कि स्मृति कथन है "वृद्ध प्रपितामह आदि चार पूर्व पितर लेप मात्र के ग्राही होते हैं और पिता-पितामह-प्रपितामह ये तीन पितर पिण्ड भागी होते हैं। सप्तम सन्तान तक पिण्ड दान का अधिकार होता है—अत: सात पीढी पर्यन्त सापिण्ड्य भाव माना जाता हैं।

८४ कलाओं में २८ कला तो स्वयं की उपार्जित होती हैं। ५६ कला छह (६) पितरों द्वारा प्रदत्त अग्रिम सर्जन प्रक्रिया की होती हैं। उनमें पिता से २१ कला, पितामह से १५, प्रतिमाह से दश (१०), वृद्ध प्रपितामह से छह (६), अति वृद्ध पितामह से तीन (३), और वृद्धातिवृद्ध पितामह से एक (१)। इस प्रकार ५६ संख्या प्रदत्त कलाओं की होती हैं। इन कलाओं में पिता, पितामह और प्रपितामह की जो २१, १५, और १० कला होती

हैं, उन तीनों में पदार्थ की अधिकता के कारण पिण्ड शब्द का प्रयोग होता है। आगे की की अल्पता होने से तीनों में ६, ३ और १ कला में पदार्थ लेप पद आता है। प्रत्येक पुरुष में ये ८४ कला नियतरूप से रहती हैं। क्योंकि इस संसार-स्थिति में एक-एक के क्रम से सारे ही पुरुष किसी के पुत्र तथा किसी न किसी के वृद्धातिवृद्ध-पौत्र भी होते हैं।

इस प्रकार यह एक-एक महान् पुरुष ८४ कला सम्पन्न समझना चाहिये। प्रत्येक व्यक्ति में निहित ८४ संख्या में सीमित सोम रसों के वर्गीकरण रूप तालिका शीर्षक से यहां परिलेख द्वारा उक्त विषय को स्पष्ट किया गया है।

अठाईस २८ कला-रूप निज की पिण्ड सम्पत्ति में जो ६ पुरुष सम्बन्धी पितृपिण्ड रसों का आवपन होता है—वह पुरुष की जीवन यात्रा का निर्वाहक होता है।

इस कारण प्रत्येक पुरुष का यह पैत्रिक ऋण हो जाता है। (अर्थात् ५६ कला ऋण रूप में आती हैं)। यह ऋण रूप में आया हुआ कला भाव भी अपने निज पिण्ड के समान दो प्रकार से इस पुरुष में सन्निवेश पाता है। अपने में रहने वाला भाग भिन्न होता है और पुत्रों में जाने वाला अन्य। अपनी जीवन यात्रा के निर्वाहक चन्द्रमा के रस को अतिरिक्त भाव से ग्रहण करने के लिए सात-ग्रह-भाव इस महान् आत्मा के स्वरूप के प्रारम्भक सात धातु रूप बनते हैं। इन से ही ये ८४ चन्द्ररसमयी यश नाम से कहे जाने वाली कला प्रतिदिन आत्मा में उत्थित होती रहती है। अतः ये उक्थकला कही जाती हैं। उनमें प्रथम, द्वितीय, तृतीय, चतुर्थ, पञ्चम, षष्ठ ये छह धन भाग तो पितृ-सम्बन्धी होते हैं। सातवां एक धन भाग अपना निजका होता है। ये सात धन ही सातग्रह कहे जाते हैं—ये ही इस महान् आत्मा का स्वरूप है। सात धातुओं से रूप पाया हुआ यह महान् आत्मा इस पुरुष में २८ कलायुक्त होता है, ये तो इस का अपने में रहने वाला निजी भाग होता है। शेष सब ५६ अंश पितरों को प्रत्यर्पण करने के लिये देयऋण रूप होते हैं। आवापपिण्ड रूप संतान क्रम में ५६ कला युक्त तन्य (पुत्र) होता है, तन से उत्पन्न होने से वह तनय कहा जाता है। वहां भी २१ कला उसकी अपनी सम्पत्ति रूप होती हैं। पन्द्रह, दश, छह, तीन और एक इन पैंतीस कलाओं से पांच पितृ-सम्बन्धी धन माने जाते हैं। वे सब सन्तान के लिये नियुक्त होते हैं—अतः सन्तान उत्पत्ति द्वारा उनसे ऋण-मुक्त होना चाहिये। इस प्रकार यह प्रजा उत्पत्ति लक्षण का पितृ-ऋण मोचन का प्रथम कर्म होता है ।।१।।

चार प्रकार से लिए गए पितरों के धन का पुनः पितरों को प्रत्यर्पण भी चार प्रकार से ही माना जाता है—१ प्रजा-रूप सन्तान उत्पन्न करके, २ सपिण्डी करण से अर्थात् मरणोपरान्त द्वादशाह को किये जाने वाले कर्मसम्पादन से, ३ श्राद्धप्रक्रिया से, ४ तथा गयापिण्डदान से।

## (१) गोत्रसन्तानः

तत्र सन्तानः—सन्तानायोपयोजिताः पितृभागाः कालक्रमेण प्रकृतिवशात् पुनरुपलब्धा भविष्यन्ति। सप्तमपुरुषतः प्राप्तव्यानां पिण्डभागानां पुत्रेण प्रथमपुरुषेण प्रकृतिविरुद्धतया लब्धुमशक्यत्वात्। सप्तमादेव सन्तानात् पितॄणामेकस्य वृद्धातिवृद्धप्रपितामहस्य मुक्तिलाभो भवतीति वक्ष्यते। सप्तमादवरे तु सन्ताना यथास्वं पितृधनं प्रत्यर्पयन्तोऽनृणा भवन्ति। तथाहि—बीजिनः पुरुषस्यात्मनीमा अष्टाविंशतिकलाः सप्तधा विभक्ताः सत्य ओप्यन्ते—

१—आत्मन्येव यथास्थानं सप्तकलाः आत्मधेयाः।

२—पुत्रे ओप्तैकविंशतेः षट्कलाः पुत्रात्मधेयाः।

३—पौत्रे ओप्तपञ्चदशभ्यः पञ्चकलाः पौत्रात्मधेयाः।

४—प्रपौत्रे ओप्तदशभ्यः चतस्रः कलाः प्रपौत्रात्मधेयाः।

५—वृद्धप्रपौत्रे ओप्तेभ्यः षड्भ्यस्तिस्रः कलाः वृद्धप्रपौत्रात्मधेयाः।

६—अतिवृद्धप्रपौत्रे ओप्तेभ्यस्तिसृभ्यो द्वे कले अतिवृद्धप्रपौत्रात्मधेये।

६—वृद्धातिवृद्धप्रपौत्रे ओप्तावशिष्टा एका कला वृ० अ० प्रपौत्रात्मधेया।

इत्थमात्मनीनस्याष्टाविंशतिकलस्य धनस्य षट्सु सन्तानेष्वावापात् सप्तकलमात्रोऽवशिष्यते। अथ सर्वोऽप्येष एकैकः पुरुषः कस्यचित् पुत्रश्च भवति कस्यचिद् वृद्धातिवृद्धप्रपौत्रश्च। तेनास्यायं सप्तकलो महानात्मा पित्र्यकलानामेकविंशत्या संसृज्यमानः पुनरन्यथा अष्टाविंशतिकलः सम्पद्यते। सन्तानेषु षट्सु यथाभागं न्युप्तानामात्मनीनैकविंशतिकलानां स्थाने षण्णां पितॄणां भागैर्यथास्थानं न्युप्तैः पुनरेकविंशतिकलानां समावेशात्। तेन च सप्ताप्येते सन्तानपुरुषाः पैतृकघनभावान्नित्यमष्टाविंशतिकलाः सन्त एवैतस्यां पृथिव्यामुपजीवन्ति।

## (१) गोत्रसन्तान

ऊपर के प्रकरणान्त में पितृॠण को उतारने के चार प्रकार बताये गए। उनमें प्रजा उत्पादनरूप प्रथम सन्तान क्रम का लेख है—उसकी विवेचना की जा रही है—सन्तान के लिये जिन पितृभागों का उपयोग हो चुकता है, उनकी पुनः उपलब्धि भी काल क्रम से प्राकृतिक यज्ञ द्वारा हो जाती है, किन्तु यह स्मरणीय है कि सप्तम पुरुष से प्राप्त

होने योग्य पिण्डांशों को पुत्र जो प्रथम पुरुष बनकर आया है, वह प्राप्त नहीं कर सकता क्योंकि यह सर्वथा प्रकृति विरुद्ध है। अविछिन्न रूप से सप्तम सन्तान हो जाने के अनन्तर ही पितृवर्ग में से वृद्धातिवृद्ध प्रपितामह को मोक्ष की प्राप्ति होती है—यह आगे बताया जायगा। सातवीं सन्तान से पूर्व की सन्तान तो स्वशक्ति के अनुसार पितृधन को प्रत्यर्पण करते हुए उऋण हो जाते हैं। स्पष्ट यह है कि बीजधारी मूल पुरुष की आत्मभाव में ये २८ कलाएं सात रूपों में विभक्त होती हुई आवपित होती हैं (बोई जाती हैं)। इनमें अपनी आत्मकला तथा पुत्र से लेकर सातवें वृद्धातिवृद्ध प्रपौत्र तक में स्थिति पाने वाली सम्पूर्ण कलाओं का तालिका रूप में मूल में ही स्पष्टीकरण कर दिया गया है। तालिका का भाव

१ अपने आत्मा में यथास्थान आत्मरक्षा करने वाली सात कलाएँ—

२ पुत्र में २१ कलाओं का आधान हुआ था-उन पुत्र की आत्म धारक छह कलाएँ—

३ पौत्र में आहित १५ कलाओं में से पौत्र की आत्म धारक पांच कलाएँ—

४ प्रपौत्र में आहित दश कलाओं में से प्रपौत्र की आत्म धारक चार कलाएँ—

५ वृद्ध प्रपौत्र में आहित ६ कलाओं में से उसकी आत्मधारक तीन कलाएँ—

६ अतिवृद्ध प्रपौत्र में आहित तीन कलाओं में से दो कला तदात्मधारक दो कलाएँ—

७ वृद्धातिवृद्ध प्रपौत्र में आहित बची हुई एक कला—जो उसकी ही आत्मधारक होती है।

इस प्रकार २८ कला रूप अपने धन का छह सन्तानों में आवपन करने के अनन्तर सात कला मात्र का मूल पुरुष रह जाता है। विचारणीय यह है कि ये सब ही एक-एक करके पुरुष प्राणी किसी का पुत्र होता है तो परम्पराक्रम में किसी का वृद्धातिवृद्धप्रपौत्र भी होता है। इस कारण इसका ये सातकला का महान् आत्मा पितरों की २१ कलाओं से जुड़ता हुआ पुनः अन्य भाव में २८ कला युक्त बन जाता है।

इसका विज्ञान यह है कि-छह सन्तान क्रमों में यथा भाग जो अपनी २१ कलाओं का आवपन किया गया—उनके स्थान में छह पितरों के भाग भी जो यथास्थान आवपित हुए उनसे पुनः २१ कलाओं का समावेश हो जाने से २८ कला बन जाती हैं। और इसी कारण सन्तान रूप ये सातों पुरुष भी पितृसम्बन्धी धन-भाव से मुक्त रहते हुए नित्य ही २८ कला-सम्पन्न जीवन पृथ्वी पर भोगते हैं।

कथित सात पुरुषों में ही प्रधानतः समान गौत्र-भाव माना जाता है—अतएव प्रकरण का शीर्षक "गोत्र-सन्तान:" अङ्कित हुआ है, ऐसा प्रतीत होता है।

## (२) सपिण्डीकरणम्

अथैतेषु यो यः कश्चिदितः प्रेतश्चन्द्रमसं गच्छति तस्य तस्यायं महानात्मा तत्र तेभ्यः पैतृकेभ्यो धनेभ्यो व्यपवृज्यते। स यथाभागं पितृधनानि पितृभ्यः प्रत्यर्पयति। वृद्धातिवृद्धप्रपितामहायैकाम्, अतिवृद्धप्रपितामहाय द्वे, वृद्धप्रपितामहाय तिस्रः, प्रपितामहाय चतस्रः, पितामहाय पञ्च, पित्रे षट्। अथात्मने सप्तैवादधानः स ऋणेभ्य उन्मुक्तो भवति। तदिदं सपिण्डीकरणं नाम कर्म्म। अष्टाविंशतिकलस्य पितॄणां पिण्डस्य सन्तानेषु निवापेन जाते पिण्डभेदे पुनरेवं प्रत्यर्पणकर्म्मणा मूलपिण्डसहयोगरूपप्रतिसंस्कारेण पिण्डैक्यसम्पत्तेः। तत्र पुत्रादिभिः षड्भिः पुरुषैः स्वस्वाहितपितृधनप्रत्यर्पणे पितृऋणामेकस्य वृद्धातिवृद्धप्रपितामहस्यायमात्मपिण्डः सम्पूर्य्यते। इत्यतोऽस्यां पृथिव्या सन्तानाभावेन बन्धनोच्छेदादुन्मुक्तबन्ध स सद्यः सूर्य्यमात्रातः परां गतिं लभते। स विमुच्यते। न तदर्थं पुनरत्र पृथिव्यां किञ्चित् कर्म्मावशिष्यते। तदेतत् सपिण्डीकरणं नाम द्वितीयं पितृऋणामृणमोचनं कर्म्म ॥२॥

## (२) सपिण्डीकरण

गौत्र सन्तान प्रकरणोक्त उन सात पुरुषों में जो कोई इस मृत्युलोक से प्रयाण करके चन्द्रमा में चला जाता है, उसका वह महान् आत्मा वहां जाकर उन पैत्रिक पिण्डानुगत धन भावों से परित्यक्त हो जाता है। वह क्रमानुसार पितरों के उन धन-भागों को पितरों के लिये ही प्रत्यर्पण कर देता हैं। उस ऋण के प्रत्यर्पण क्रम में वृद्धातिवृद्ध-प्रपितामह के लिये एक कला का प्रत्यर्पण, अतिवृद्ध प्रपितामह के लिये दो कला, वृद्ध-प्रपितामहार्थ तीन कला, प्रपितामहार्थ चार कला, पितामहार्थ पांच कला, और पिता के लिये ६ कला समर्पित होती हैं। इस प्रकार उसकी अपनी सातकलामात्र को ही धारण करता हुआ वह पितृऋण से मुक्त हो जाता है। यह सपिण्डीकरण नाम का कर्म कहा जाता है। २८ कला युक्त पितरों के पिण्डरस का सन्तानों में निवाप हो जाने से पिण्डरस के विच्छिन्न हो जाने पर, पुनः इस प्रत्यर्पणरूप कर्म के द्वारा मूलपिण्ड के सहयोगरूप प्रतिसंस्कार से एक पिण्ड-भाव सम्पन्न हो जाता है। उस स्थिति में पुत्र आदि छह पुरुषों के द्वारा अपने-अपने में आधान किये गए पितरों के धन का प्रत्यर्पण कर देने पर पूर्व पितरों में से एक वृद्धातिवृद्धप्रपितामह का यह पिण्डरस सम्पूर्ण हो जाता है। इसी कारण इस भूतल पर आगे सन्तानक्रम का अभाव हो जाने से बन्धनभाव टूट जाने से मुक्त-बन्धन होकर वह सप्तम पितृ-पुरुष तत्काल सूर्य मात्रा (सूर्य की परिधि) से आगे की सूक्ष्म गति को प्राप्त कर लेता है। वह मुक्त हो जाता है। उसका इस भूतल रूप कर्म भूमि में फिर कोई करणीय कर्म शेष नहीं रहता है। इस प्रकार यह सपिण्डीकरण नाम का पितृ-ऋण मोचन रूप द्वितीय कर्म होता है।

# (३) श्राद्धम्

अनेन च सपिण्डीकरणेन ऋणोद्धारकर्म्मणा तावदेकः पितॄणां वृद्धातिवृद्धः परिलब्धसर्वधनः सम्पन्नकृत्स्नपिण्डोऽभिनिवर्तते। अन्ये तु पञ्चपितरोऽपर्य्याप्तलाभा अपि यथा कथञ्चित् पिण्डशेषलाभात् सिद्धपिण्डसंस्कारा भवन्ति।

तथा हि—अतिवृद्धादयोऽवरे पञ्चपितरः क्रमेण सप्तविंशतिकलाभिः, पञ्चविंशतिकलाभिर्द्वाविंशतिकलाभिरष्टादशकलाभिस्त्रयोदशकलाभिरभिसम्पद्यन्ते। पिण्डस्त्वेष एकः सप्तकलमात्रोऽवशिष्यते। पिण्डपूरकाणामात्मनीनानामेकविंशतिभागानां सन्तानेषु न्युप्ततया पित्र्यावापानां तु पितृषु न्युप्ततया पिण्डशेषालाभात्। तदित्थमेते षट् पुरुषाः क्षीणकायाः पृथिव्यां दृष्टिं निक्षिपन्तः सन्तानेभ्यो भागमिच्छन्ति। न चेदानीं ते भागाः पृथिव्यां सद्भिर्जीवद्भिः संतानैः शक्यन्ते प्रत्यर्पयितुम्। अतश्च पिण्डभागलिप्सूनां पितॄणामाप्यायनार्थं श्राद्धकर्म्मोपायः परिदृष्टो वैज्ञानिकैः। यावतेदं पितृधनं सर्वात्मना कात्स्न्र्येन न प्रत्यर्प्यते तावति काले पार्वणश्राद्धीयेन कर्म्मणा तेभ्यः षट् पुरुषेभ्यः पितृभ्योऽन्नपिण्डदानं कर्तव्यम्। देवेभ्यो हव्ययज्ञवदयं पितृभ्यः कव्ययज्ञः। यथा वैधाग्नौ प्रास्ताहुतिः सम्यगादित्यं देवेभ्य उपतिष्ठते एवमियं श्रद्धाग्नौ प्रास्ताहुतिः सम्यगादित्यं पितृभ्य उपतिष्ठते।

रेतः, श्रद्धा, यशः, इति हि सोमानुबन्धीनि त्रीणि ब्रह्माणि। श्रद्धा वा आपः, ता हीमाः श्रद्धा आदित्याग्निपरितापयोगात् परिणममानाः सोमो भवति। तथा च श्रूयते पञ्चाग्निविद्यायाम्—

> "असौ वाव लोकोऽग्निः तस्यादित्य एव समित्।
> तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति। तस्या आहुतेः
> सोमो राजा सम्भवति—" इति। (छा.उ. ७-४-१,२)

इत्थं चेदमापोरूपं सोमप्रजननं ब्रह्म श्रद्धेति निष्कृष्यते। श्रतो हीदं धानमतः श्रद्धा शब्दः। श्रत् सत्यम्। सति विद्यमानेऽर्थे यदन्यत् किञ्चिदाश्रितं तिष्ठति तत् सदाश्रितं द्रव्यं सत्यम्। तदन्यच्छ्रयते तस्मात् श्रत्। येन तु रसेनानुबद्धमिदं श्रदन्यत्र प्रणिहितं भवति ता आपः श्रद्धा। यथा खलु सोमजमिदं मनो यमर्थं श्रद्धत्ते तत्राभेदेन संलग्नं दृढबद्धं भवति।

> "श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः।"

इति पश्यामः। यस्य यः कश्चन सम्बन्धी भवति अवश्यं तु तयोरन्योऽन्यं कश्चन सम्बन्धोऽभिज्ञायते। स च सम्बन्धो नूनं सम्बन्धिद्वयातिरिक्तं किञ्चिदेकं द्रव्यं द्विनिष्ठं स्यात्। तत्रैवायं श्रद्धाशब्दो नियम्यते। मेध्या वा आपो मेध्या श्रद्धा। श्रद्धासूत्रयोगादेकमन्यत्रावश्यं मेध्यतीति स्थितिः।

अपि च सोमरसमयानां पितॄणां शरीरारम्भकस्य पिण्डस्यार्द्धं चन्द्रेऽथापरमर्द्धं सन्तानकृतं पृथिव्यामिति। न चैकस्य खण्डद्वयमसम्बद्धं कदाचिदवतिष्ठते। अदृष्टं चेदं सम्बन्धसूत्रं श्रद्धानाम्ना पश्यन्ति वैज्ञानिकाः। यथा चेह मनुष्यैरनुपलभ्यमानापि गन्धमात्रा मक्षिकापिपीलिकादिभिरुपलभ्यते इत्यस्ति। यथा च गच्छतां प्राणिनां शरीरयोगोपजनितः पृथिव्यां गन्धविशेषः सुनिपुणैरपि मनुष्यघ्राणैरगृहीतः सरमावंशजनितेन श्वविशेषेण सुदीर्घकालोत्तरमप्याघ्रायते इत्यस्ति। एवमिदं सम्बन्धिनोः सम्बन्धनहेतुभूतं श्रद्धासूत्रं मनुष्येन्द्रियातिगामित्वान्मनुष्यैर्ग्रहीतुमशक्यमपि योगजदृष्टिविशेषाद् योगविद्याप्रभावेण योगिभिरुपलभ्यते इत्यस्तीति प्रतिपत्तव्यम्। सन्ति खल्वयोगिभिरनभिगम्या अतीन्द्रिया बहवोऽर्थास्तान् वयं न पश्याम इत्यतस्ते न सन्त्येवेति साहसिकानामवैज्ञानिकानां प्रलापमात्रमत्यन्तमुपेक्ष्यम्। अत एव चानुबोधयन्ति वैज्ञानिकाः सम्परायविद्यानुप्रसङ्गेन—

**"श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि**
**बहवो यं न विद्युः। आश्चर्यो वक्ता कुशलोऽस्य**
**लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः॥ १॥**

**न नरेणावरेण प्रोक्त एष सुविज्ञेयो बहुधा चिन्त्यमानः।**
**अनन्यप्रोक्ते गतिरत्र नास्ति अणीयान् हि अतर्क्यमणुप्रमाणात्॥ २॥**
**नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ"॥ इति॥ (कठोपनिषत् २/७-९)**

**"अत्र बहुधा चिन्त्यमानः सुविज्ञेय"**—इत्युक्तम्। अतश्चेदं यैर्बहुधा सुचिन्तितं तेऽवश्यमत्र श्रद्दधते। ये त्वकुशला अयोग्या विज्ञानाय ग्लायन्ति, तेषामयमलभ्योऽर्थ इत्युपेक्ष्यम्।

प्रकृतमनुसरामः। चन्द्रलोकस्थानां पितॄणां शरीरारम्भकपिण्डावयवस्तत्सन्तानशरीरारम्भणायोपयुज्यमानः पृथिव्यामवतिष्ठते। तदुभयसंस्पृष्टं चैकं श्रद्धासूत्रं तयोरर्द्धयोः सन्धानाय विज्ञायते—इत्येतावानयमर्थस्तावदाख्यातः। तदुभयाननुबन्धिभिस्तु नितान्तमसम्बद्धः कैश्चिदन्यैरर्थैर्नेदं श्रद्धासूत्रं संघृष्यते न व्याहन्यते न विच्छिद्यते। यस्य तु न सन्तानस्यात्मनः पितृषु श्रद्धा नास्ति तस्यावश्यमिदं श्रद्धासूत्रमुच्छिन्नं विद्यात्। न च तेन कृतं पिण्डदानमेभ्यः पितृभ्य

उपतिष्ठते । आतिवाहिकस्य मार्गपरिभ्रंशेन तत्र तद्गमनायोगात् । सोमभयं हीदं श्रद्धासूत्रं चन्द्रस्थितितारतम्यवशात् कालविशेषेण कृश्यति च मेद्यति च । देवैः परिभुक्तस्य सोमस्य पूर्णिमायां तनीयस्त्वेन कनीयस्त्वमिति श्रद्धासूत्रं कृशं भवति । अथामायां तद्भूयस्त्वादियमाप्यायते श्रद्धा । बलाधिक्याच्च तत्र प्रदीयमानमन्नं (कव्यं) श्रद्धया चन्द्रमसमुपतिष्ठमानं पितॄष्वाधीयते । तस्मादिहामायां कर्तव्यं षट् पुरुषीयमिदं पिण्डदानं पार्वणश्राद्धम् ।

"चन्द्रोर्ध्वभागे पितरो वसन्तीति" सिद्धान्तान्मासेन स्यादहोरात्रः पैत्र इति कृत्वाऽयममावास्यातिथिः पितॄणां मध्याह्नसमयो भवति । मध्याह्ने च प्राचुर्य्येण प्रचरन्तो देवाः सोमं यथालाभमात्मोदरे कुर्वन्तीति निसर्गात् सौम्या इमे पितरस्तदानीमपक्षयभाजो भवन्तो विषीदन्ति । अतश्चैतस्मिन् समयेऽमावास्यायामन्नपिण्डदानमेषां पितॄणामाप्यायनायोपयुज्यते । इतः प्रदाना ह्येते पितरः श्रूयन्ते । तत्र संतानन्युप्तं तदन्नं श्रद्धासूत्रोपसंहितं चतुर्भिरुपायैः प्रकृतिसिद्धैराकृष्टं स्वतः पितॄनुपस्थितं भवति । तथाहि—

## (३) श्राद्ध

सपिण्डीकरण रूप इस पितृऋण के उद्धार करने वाले कर्म से पूर्व पितरों में से एक वृद्धातिवृद्धपुरुष पितृसम्बन्धी सारे विकास भाव को पूरा कर लेता है, उसका पिण्डसम्बन्ध पूरी तरह से छूट जाता है—अतः उसका मुक्तभाव बताया जा चुका है । अन्य पांच पितर तो पूरा अंशलाभ न करते हुए भी जैसे तैसे किसी तरह बचे हुए पिण्डांश को पा जाने से पिण्ड संस्कारों से सिद्ध होते हैं ।

ये अतिवृद्ध आदि अवर कहे जाने वाले पांच पितर क्रमशः २७ कलाओं से २५ कलाओं से, २२ कलाओं से, १८ कलाओं से और १३ कलाओं से ही सम्बद्ध होते हैं । पिण्डदान करने वाला तो ये अकेला सात कला मात्र का शेष रहता है । पिण्डांशों को पूर्ण करने वाले अपने २१ भागों का सन्तानों में आवपन कर देने से तथा पितृसम्बन्धी आवपनांशों का पितरों में निःशेष भाव से आवपित हो जाने से शेष पिण्डांश बचता नहीं है । इस कारण ये छह पुरुष क्षीणकाय हो जाते हैं—अतः पृथ्वी पर दृष्टि निक्षेप करते हुए सन्तानों से अंश पाना चाहते हैं, किन्तु अब वे अंश पृथ्वी पर सत्ता पाये हुए जीवित सन्तानों द्वारा प्रत्यर्पित नहीं किये जा सकते । अतः पिण्डभागों की लिप्सा रखने वाले पितरों की तृप्ति के लिये वैज्ञानिकों ने श्राद्ध कर्मरूप उपाय की खोज कर ली थी ।

जब तक वह पैत्रिक धन सारा का सारा निःशेष भाव से पितरों को प्रत्यर्पित नहीं कर दिया जाता है, उस कालपर्यन्त पार्वणश्राद्ध योग्य कर्म के द्वारा उन छः पितरपुरुषों के लिए इस पृथ्वी पर रहते हुए—पिण्डदान करना चाहिये । देवताओं के यज्ञ में जैसे हव्य

का दान होता है वैसे ही पितरों के लिए यह कव्य यज्ञ होता है—जैसे विधिपूर्वक प्रकट की गई यज्ञ की वैध अग्नि में मन्त्र द्वारा की गई आहुति ठीक प्रकार से आदित्य लोक में पहुंच कर देवताओं को मिल जाती है, उसी प्रकार श्रद्धा रूप अग्नि में मंत्र द्वारा की गई यह कव्य की आहुति उचित रूप से आदित्य में पहुंच कर पितरों को मिल जाती है।

रेतस्, श्रद्धा, यश ये तीनों सोम से बंधे हुए ब्रह्म कहे जाते हैं। श्रद्धा कहें या आपः कहें, एक ही अर्थ है। ये श्रद्धारूप सूक्ष्म आप आदित्यरूप अग्नि के परिताप योग से परिवर्तित होते हुए सोम रूप हो जाते हैं, जैसा कि पञ्चाग्नि विद्या में वेदवचन है—

"यह लोक अग्नि है। इस अग्नि की आदित्य ही समिधा है। इस अग्नि में देवता श्रद्धा का हवन करते हैं। उस आहुति से सोम राजा का उदय होता है"।

निष्कर्ष यह निकलता है कि आप का यह रूप जो सोम का प्रजनन करने वाला है, वह ब्रह्ममय है, उसे ही श्रद्धा कहा जाता है। श्रत् में यह रक्खा जाता है इसलिए इसे श्रद्धा कहा जाता है, सत्य माव को ही श्रत् कहते हैं। किसी पदार्थ के वर्तमान रहते हुए उसमें जो कुछ अन्य पदार्थ उसके आधार पर रहता है, वह सत् के आधार का द्रव्य सत्य कहा जाता जाता है। दूसरे का उच्छ्रय हो जाता है, इसलिए उसे श्रत् कहते हैं। जिस रस से बांध कर यह श्रत् अन्यत्र भेजा जाता है, वह रसमय आप ही श्रद्धा है—जैसा सोम से उत्पन्न हुआ यह मन जिस पदार्थ के प्रति श्रद्धा रखता है, उसमें अभिन्न भाव से संलग्न होकर दृढ़ता से बंध जाता है जैसा कि वेद वचन है "यह पुरुष श्रद्धा मय होता है जिसकी जैसी श्रद्धा होती है, वह वैसा ही होता है" यह देखा जाता है।

संसार में जिसका कोई सम्बन्धी होता है, उनका परस्पर कोई सम्बन्ध भी अवश्य माना जाता है। वह सम्बन्ध निश्चित रूप से उन दो सम्बन्धियों के अतिरिक्त दोनों में रहने वाला एक द्रव्य मानना चाहिये। वहीं यह श्रद्धा शब्द नियमित होता है। आप मेध्य होती है अर्थात् पवित्र होती है, वैसे ही श्रद्धा भी मेध्या है। इस श्रद्धासूत्र के योग से एक अन्यत्र पहुंचकर अवश्य धारणा युक्त हो जाता है, धारणा शक्ति को ही मेधा कहते हैं (स्पष्ट यह हुआ कि श्रद्धारूप आप भाव के साथ दिया गया कव्य रूप पिण्ड पितरों के पास पहुंचकर गत अंशों को पूर्ण करता रहता है)।

यह भी ध्यान रखना चाहिये कि सोमरस पितरों के शरीर निर्मायक पिण्ड का आधा भाग चन्द्र में जाता है और आधा भाग सन्तान के लिए पृथ्वी में रहता है। एक के दो खण्ड कहीं भी बिना सम्बद्ध हुए नहीं रह सकते। यह नहीं दीखने वाला सम्बन्धसूत्र श्रद्धा नाम का होता है, ऐसा वैज्ञानिक मानते हैं। जैसे इस संसार में मनुष्य जिस गन्ध मात्रा को नहीं पाते हैं, वही गन्ध मात्रा मक्खी और चीटियां पा जाती है, ऐसा प्रत्यक्ष देखा जाता है। इसी तरह से जाते हुए प्राणियों के शरीर के सम्बन्ध से पैदा हुआ पृथ्वी में जो

गन्ध विशेष है, उसको चतुर से चतुर मनुष्य भी अपनी नासिका से ग्रहण नहीं कर पाता, किन्तु सरमा के वंश में पैदा हुए विशेष जाति के कुत्ते दीर्घ-काल बीत जाने पर भी उस प्राणि-संयोगजनित पृथ्वी के गन्ध को पहचान लेते हैं, यह भी स्पष्ट देखा जाता है। कितने ही पदार्थ संसार में ऐसे हैं; जो इन्द्रियों से नहीं पहचाने जा सकते हैं, किन्तु योगी उनको पहचानते हैं। योग न जानने वाले उन पदार्थों को नहीं जानते, अतः वह पदार्थ ही नहीं है— ऐसा कहना तो दुस्साहसी विज्ञान न जानने वालों का प्रलाप मात्र माना जायगा। उसकी तरफ ध्यान नहीं दिया जा सकता।

इसी विषय को सम्पराय विद्या के प्रसङ्ग में वेद-विज्ञान के विद्वानों ने वेदवचन के रूप में इस प्रकार स्पष्ट किया है—

> बहुत से लोग तो उस अदृष्टतत्त्व के विषय में किसी से कुछ सुन ही नहीं पाते और सुनते हुए भी बहुत से जिस अदृष्ट तत्त्व को जान ही नहीं पाते। उस अदृष्ट ब्रह्ममय तत्त्व का कोई व्याख्यान करता है, यह भी आश्चर्य है।
>
> जो शब्दगम्य नहीं होता उसकी व्याख्या करना आश्चर्य ही तो है। उस व्याख्या को सुनकर कोई उसको पा जाय, वह तो बहुत ही कुशल मनुष्य है, किसी परम-कुशल गुरु ने ही उसे ज्ञान कराया है, यह भी एक आश्चर्य ही है ॥१॥
>
> किसी दूसरे मनुष्य के द्वारा उपदेश देने पर यह विषय अच्छी तरह से नहीं जाना जा सकता, यह तो अपने आप बहुत चिन्तन करने पर ही समझा जा सकता है। यह स्वयं भगवत् कृपा से जाना जाता है, अन्य कोई गति इसके जानने में नहीं है। ये अत्यन्त अणु भाव का है, किसी तर्क शक्ति से नहीं जाना जा सकता ॥२॥
>
> यमराज नचिकेता से कहते हैं, हे प्रिय नचिकेता गुरु का दिया हुआ उपदेश ही वास्तविक ज्ञान को कराने के लिए समुचित होता है, उसमें तर्कमयी बुद्धि द्वारा मतिभ्रम नहीं करना चाहिये। इस वेद वचन में बहुत काल तक चिन्तन करने से अच्छी तरह जाना जा सकता है, यह कहा गया है। अतः यह सिद्ध होता है, कि जो इसका सतत चिन्तन करते हैं, वे अवश्य ही इसमें श्रद्धा रखते हैं। इसके विपरीत जो शास्त्र के समझने में कुशल नहीं है, अयोग्य हैं और विज्ञान विषय में प्रवेश करने से घबराते हैं, उनको यह दुर्लभ तत्त्व प्राप्त नहीं हो सकता, इसलिए इसकी उपेक्षा की जाती है।

हम अपने विषय पर आते हैं। चन्द्र लोक में रहने वाले पितरों के शरीर निर्मापक पिण्डों का अंश उनकी सन्तान के निर्माण के लिए उपयोग में लाये जाने के लिए पृथ्वी में भी रहता है।

इन दोनों से जुड़ा हुआ एक श्रद्धा सूत्र आधे-आधे उन दोनों को मिलाने के लिए जाना जाता है, यहाँ तक का विषय विवेचित हो चुका है। जो इन दोनों का परस्पर सम्बन्ध सूत्र नितान्त जुड़ा हुआ नहीं मानते, वह मत से नितान्त असम्बद्ध है। क्योंकि किसी अन्य पदार्थ के द्वारा न तो ये श्रद्धा सूत्र घर्षित किया जा सकता है, न यह नष्ट होता है। न यह टूटता है। जिस सन्तान की आत्मा की पितरों में श्रद्धा नहीं है, उनका अवश्य यह श्रद्धा-सूत्र टूटा हुआ मानना चाहिये और इस श्रद्धा-सूत्र के बिना किया हुआ पिण्डदान इन पितरों के पास नहीं पहुंचता। श्रद्धा-सूत्र न होने से आतिबाहिक वायु के द्वारा मार्ग भ्रष्ट होकर उसकी वहां पहुंचने की योग्यता नहीं होती। ये श्रद्धा-सूत्र सोममय होता है, अतः चन्द्र की स्थिति के तारतम्यवश काल-विशेष से यह कृश भी हो जाता है तथा कभी पुष्ट भी हो जाता है। पूर्णिमा के दिन देव, सारे सोम का भोग कर लेते हैं, अतः अतिदुर्बल होकर छोटा पड़ता हुआ श्रद्धा सूत्र कृश हो जाता है। और अमावस्या के दिन देवभोग न होने के कारण सोम अधिक हो जाता है, श्रद्धा का आप्यायन हो जाता है और सोमबल के अधिक होने के कारण उस समय दिये जाने वाला कव्यरूप अन्न श्रद्धा द्वारा चन्द्रमा में पहुंच कर पितरों को पहुंचा दिया जाता है, इस कारण ये छः पुरुष सम्बन्धी पिण्डदान अमावस्या के दिन पार्वण-श्राद्ध रूप में करना चाहिये।

"चन्द्रमा के उपरि भाग में पितर निवास करते हैं" इस सिद्धान्त से एक मास के ३० अहोरात्रों में पितरों का एक अहोरात्र माना जाता है, इस कारण अमावस्या पितरों का मध्याह्न समय होता है। मध्याह्न काल में अधिक संख्या में विचरण करने वाले देव सोम को जैसे भी जहां से भी प्राप्त कर सकें, वहां से प्राप्त करके अपने उदर में समाविष्ट कर लेते हैं और स्वभाव से सरल भाव के ये सौम्य पितर उन सोम रसों से वञ्चित होते हुए विषाद में पड़ जाते हैं। अतः ऐसे समय में अमावस्या में अन्न-रूप पिण्डों का दान इन पितरों की तृप्ति के लिए उपयुक्त होता है। भूतल से दिये गये पदार्थ को लेने वाले ही ये पितर वेद में सुने जाते हैं—उस क्रम में सन्तान के द्वारा अर्पित किया वह अन्न श्रद्धा सूत्र से जुड़ा हुआ, प्रकृति सिद्ध चार उपायों से खिंचा हुआ, स्वतः पितरों के पास पहुंच जाता है जैसा कि कहा गया है।

**(१)—अपत्यसन्तानः सौम्यः, तस्येदं मनः सौम्यम्।**
**मनसि चेयं श्रद्धा सौम्या इति प्रतियोगितः।**

**(२)—अथ अन्नमौषधं सौम्यम्। तेनायमन्नपिण्डः सौम्यः।**
**अन्नपिण्डादुद्ध्रियमाणो वायुनोन्नीतश्चन्द्ररश्मिं प्रपन्नोऽन्नरसः। इति निवापतः।**

(३)—"अमा तिथिः सौम्या । चन्द्रात् पृथिवीमागच्छन्तश्चन्द्ररश्मयः सौम्याः । गायत्र्या सहोपरिष्टाद्गच्छन्तश्चन्द्ररश्मयः सौम्याः" इत्यातिवाहिकतः ।

(४)—"पितरः सौम्याः । पितृपिण्डः सौम्यः । ऋतुः सौम्यः" । इत्यनुयोगितः ।

इत्येतेषां चतुर्णां सौम्यानां प्रचयादुपपद्यमानः सर्वैक्यसोमघनो गुरुविद्या-शिष्यमनोयोगवन्निषेकाय प्रकल्पते । सद्यस्तदेषामुपक्षीणकलेवराणामाप्यायनाय सम्पद्यते श्राद्धम् । तत्रैतेषां चतुर्णामपि सोमरसानां प्रतियोगि—निवापातिवाहिकानुयोगिनामेकस्मिन् सोमसम्बन्धिनि श्रद्धासूत्रेऽभिसम्बन्धादन्नरसस्य चन्द्रपृष्ठ-स्थेषु पितृषूपस्थितौ श्रद्धामेव मुख्यं हेतुं विद्यात्तेनेदमुच्यते श्राद्धम् । तदिदं तृतीयं पितृऋणमोचनं कर्म्म ।। ३ ।।

बहवः श्राद्धभेदा वक्ष्यन्ते तेषां सर्वेषामत्रैवान्तर्भावः कल्प्यः । अविशेषेणैषां पिण्डदानानां चन्द्रलोकस्थेभ्यो महत्संज्ञकेभ्य आत्मसंस्काराय क्रियमाणत्वात् ।

(१) अपत्य-रूप सन्तान सोम से उत्पन्न होती है, उसका यह मन सोममय होता है और मन में यह श्रद्धा सोममयी होती है । यह प्रतियोगी भाव है ।

(२) यह अन्न जो औषध कहलाता है, यह सोममय है । इसलिए अन्न से बना हुआ पिण्ड भी सोममय है और अन्नरूप पिण्ड से उठाया हुआ, वायु के द्वारा ले जाया जाने वाला, चन्द्र की रश्मिमण्डल में पहुंच जाने वाला अन्न का सूक्ष्म रस भाग भी सौम्य है । ये निवापक क्रम है ।

(३) "अमा तिथि (अमावस्या) सौम्य है । चन्द्र से पृथ्वी पर आती हुई चन्द्र की किरणें सौम्य हैं । गायत्री के साथ ऊपर जाती हुई, चन्द्र की रश्मियां भी सौम्य हैं ।" यह आतिवाहिक क्रम है ।

(४) पितृगण सौम्य हैं । पितरों का पिण्ड सौम्य है । ऋतु सौम्य है । यह अनुयोगि क्रम है ।

इस प्रकार इन चार सौम्य भावों के प्रचय से पैदा होने वाला सबका मिला एक सोम का घन-भाव गुरू-विद्या-शिष्य के मनोयोग के समान निषेक के लिए उपयुक्त हो जाता है, अतः तत्काल उन पितरों के जिनके कलेवर क्षीण होने लगते हैं, उनकी तृप्ति के लिए श्राद्ध किया जाता है । वहां इन चारों सोम रसों के प्रतियोगी निवाप्, आतिवाहिक अनुयोगी इनमें से किसी एक सोम भाव से सम्बद्ध रखने वाले श्रद्धा-सूत्र में सम्पूर्ण रूप से बंध जाने से अन्न रस की चन्द्रमा के पृष्ठ देश में रहने वाले पितरों के पास पहुंच जाने में, श्रद्धा को ही मुख्य हेतु समझना चाहिये । उस श्रद्धा के कारण ही इसे श्राद्ध कहा जाता है । पितरों के ऋण चुकाने का श्राद्धरूप यह तीसरा कर्म बताया गया ।।३।।

बहुत से श्राद्ध के भेद कहे जायेंगे उन सबका इन्हीं में अन्तर्भाव कर लेना चाहिए, क्योंकि सामान्यतया सर्वत्र पिण्डदानों का उपयोग चन्द्रलोक में रहने वाले महान् नाम के पितरों के आत्मसंस्कार के लिए किया जाता है।

## (४) गयापिण्डदानम्

अथैकं तु गयापिण्डदानमेभ्य: सर्वेभ्योऽतिरिच्यते। चन्द्रलोकादन्यत्र कर्म्मगतिं गतस्य कर्म्मात्मनो भूतात्मन: समुद्धारार्थे तत्करणात्। न खलु महान्तमात्मानमन्तरेणायं कर्म्मात्मा भूतात्मा क्षणायाप्यवस्थातुं शक्नोति।

"तावुभौ भूतसंपृक्तौ महान् क्षेत्रज्ञ एव च।
उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठत:" ॥ १ ॥ (इति मनुस्मरणात्) (१२/१४)

तेन त्यक्तशरीराणां भूतात्मनां पौर्विकक्षेत्रज्ञे सूर्य्यं गते महति चात्मनि चन्द्रं गते सद्य एवायमपूर्व: क्षेत्रज्ञ: सूर्य्यात्—अथापूर्वो महानात्मा चन्द्रादुपपद्यते। तस्य चापूर्वस्य महतो भूतात्माश्रयस्योद्धारार्थे भवतीदं गयापिण्डदानमेक उपाय:। महतश्चात्मनो विमुक्तौ निराश्रयोऽयं भूतात्मा त्यक्तबन्धनो विमुच्यते। अपि च गयापिण्डदानादक्षयकर्म्माश्वत्थसम्बन्धी कर्म्मपिण्डो नि:शेषपरिक्षीण: क्रियते। तेनायं कर्म्मात्मा विमुच्यते कर्मभ्य:। "प्राणा वै गया:; तत् प्राणांस्तत्रे"—(बृ० आ० ५/१४/४) इति गायत्रीविद्याश्रुते: प्राणविशेषा हीमे गया असङ्गजातीया आत्मनि कर्म्मसङ्गं व्यपवर्जयन्ति। सर्वाण्येव सञ्चितानि कर्म्माणि क्षणादिवोपभुक्तानि त्वगिवाहे: परिवृज्यन्ते। प्रारब्धकर्म्मभोगादूर्ध्वं निवृत्तनि:शेषकर्म्मा विशुद्ध: परिमुक्तो भवति। एतच्चैकमन्यत् पितॄणामृणमोचनं कर्म्म।

तदाहु:—

"एष्टव्या बहव: पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्" ॥ १ ॥ इति ॥

भिन्नात्मसंस्कारत्वाच्चैकेनान्यस्याकृतार्थत्वात् कृतगयाश्राद्धैरपि न पूर्वोक्तानि महत: श्राद्धानि परिवर्ज्यानि। चन्द्रलोकस्थानां महतामात्मनां सप्तमपुरुषप्रजननादर्वाक् पिण्डपूर्त्यभावात्। अपूर्णपिण्डानां तु पृथिवीनिर्बद्धतया मुक्तेरशक्यत्वात्। तस्मात्—

"अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसंकीर्त्तनाय च" ।। १ ।। इत्याहुः ।।

इति गयापिण्डदानम् ।
इति श्रीमधुसूदनविद्यावाचस्पतिप्रणीता
पितृसमीक्षा सम्पूर्णा ।।

# (४) गया पिण्डदान

सपिण्डीकरण तथा श्राद्ध प्रक्रिया के अतिरिक्त गया क्षेत्र में किया गया एक पिण्ड दान सब से श्रेष्ठ होता है । कर्ममय आत्मा जो भूतात्मा है—वह निज कर्मवश चन्द्रलोक में न जाकर दुष्कर्म के फल स्वरूप कहीं अन्यत्र जाकर दुर्गतिग्रस्त हो जाता है—उसके उद्धार के लिये गया में पिण्डदान किया जाता है । यह तो एक निश्चित नियम है कि महान् आत्मा के बिना ये कर्मात्मा स्वरूप भूतात्मा क्षण भर भी कहीं नहीं रह सकता । जैसा कि मनुस्मृति का वचन है—

"महान् आत्मा और क्षेत्रज्ञ (आत्मा) ये दोनों भूतात्मा से सम्बद्ध होकर छोटे-बड़े सब प्राणियों में व्याप्त होकर रहते हैं" ।।१।।

इस नियम से जिन भूतात्माओं ने शरीर का त्याग कर दिया है वे पूर्व दिशा के क्षेत्रज्ञ सूर्य में चले जाते हैं और महान् आत्मा चन्द्र में चला जाता है । वहां जाने पर तत्काल ही सूर्य से नयाक्षेत्रज्ञ आत्मा सम्पन्न हो जाता है—तथा चन्द्रमा से भी नवीन महान् आत्मा बन जाता है । भूतात्मा का आधारभूत जो वह नवीन महान् आत्मा होता है, उसके उद्धार के लिए ये गया में पिण्ड दान-रूप एक उपाय होता है । उस नये महान् आत्मा से छुटकारा पाकर यह भूतात्मा निराधार हो जाता है—अतः वह कर्म बन्धन का त्याग करके विमुक्त हो जाता है । विशेषता ये भी होती है कि गया में पिण्डदान कर देने से कभी क्षीण न होने वाले कर्मों में जनित अश्वत्थ (शरीर) सम्बन्धी कर्म-पिण्ड भी सर्वथा क्षीण कर दिया जाता है । इस हेतु से यह कर्ममय आत्मा भी कर्मों से विमुक्त हो जाता है । वृहदारण्यक के "प्राण ही निश्चित रूप से 'गय' कहे जाते हैं", इस वचन के अनुसार गायत्रीविद्या श्रुति के प्राण विशेष ही ये 'गय' नाम के प्राण होते है, ये असङ्गजातीय होते हैं अर्थात् किसी की संगति नहीं करते-अतः अपने स्वभाव से ये कर्म सङ्गति का सर्वथा अपवर्जन कर देते हैं । अतः सारे ही सञ्चित कर्म मानो क्षण भर में मुक्त होकर समाप्त हो जाते हैं—जैसे सर्प अपनी पुरानी त्वचा को छोड़ देता है, वैसे कर्मों से निवृत्त होकर विशुद्धभाव से पूर्णतया मुक्त हो जाता है । इस प्रकार ये गया पिण्डदान-रूप कर्म स्वतन्त्र-रूप से पितरों के ऋण का मोचन करने वाला कर्म होता है ।

आचार्यों का कथन है कि—

> मनुष्य को अनेक पुत्रों की प्राप्ति की अभिलाषा रखनी चाहिये, उनमें से यदि एक पुत्र भी गया में जाकर पिण्डदान करे, अथवा पितरों के निमित्त अश्व-मेध यज्ञ करे, अथवा तन्निमित्त ही नीले वृष (काले सांड) का उत्सर्जन करे तो पितरों की मुक्ति हो जाती है ।।१।।

आत्मा के संस्कार भिन्न-भिन्न होते हैं, अतः एक संस्कार से अन्य का प्रयोजन सिद्ध नहीं हो सकता, इसलिये जिन्होंने गया श्राद्ध कर लिया है, उनको भी पूर्वोक्त महान् आत्मा सम्बन्धी श्राद्ध कर्मों का त्याग नहीं करना चाहिए। चन्द्रलोक में रहने वाले महान् आत्माओं की पिण्डपूर्ति सप्तम सन्तान की उत्पत्ति के पहले नहीं हो सकती है । जिनके पिण्ड भावों की पूर्णता नहीं होती वे पृथ्वी से बंधे रहते हैं—अतः उनकी मुक्ति नहीं हो सकती । अतः आचार्यों ने कहा है—

> जिनके पुत्र नहीं हों, उनको किसी भी प्रयत्न के द्वारा पुत्र उत्पन्न करना चाहिये । पिण्डदान और जलदान रूप कर्म के लिये तथा मरणोत्तर भी नाम सङ्कीर्तन के लिये पुत्रोत्पत्ति आवश्यक होती है ।।१।।

इति गयापिण्डदानव्याख्यानम् ।

इति मधुसूदनविद्यावाचस्पतिप्रणीता पितृ-समीक्षा सम्पूर्णा ।।

